

Rs. 30/-



Rs. 40/-



Rs. 30/-



Rs. 30/-



Rs. 25/-



Rs. 30/-

**CHANDAMAMA BOOKS ARE ALREADY A LEGEND! THEY OPEN A NEW HORIZON ON THE WORLD OF LITERATURE FOR THE YOUNG**

Added to the six titles by **Manoj Das** is the charming seventh–

**WHEN THE TREES WALKED**

by the inimitable story-teller **Ruskin Bond**



Rs. 30/-

Among the titles in the process of production are:

**STORY OF KRISHNA**
**STORY OF RAMA**
**STORY OF BUDDHA**



For details, write to:

**CHANDAMAMA BOOKS**
Chandamama Buildings
Vadapalani, Madras - 600 026.



# वाचकानाम् अवधानार्थम् ....

चन्दमामानिमित्तं विदेशात् यानि कागदानि आनीयन्ते तेषां प्राप्तौ महान् विलम्बः जातः । एप्रिल्मासस्य मध्यभागे अपि तानि न प्राप्तानि । विलम्बेन एप्रिल्(१९९८)सञ्चिकायाः प्रकाशनं न शोभते इति मत्वा वयम् एप्रिल्सञ्चिका-प्रकाशनविषयं सविषादं परित्यज्य ताम् एव मे-१९९८ सञ्चिकात्वेन प्रकाशयन्तः स्मः । वाचकाः अस्माकम् अनन्यगतिकताम् अवगत्य सहकुर्वन्ति इति विश्वसिमः ।

– प्रकाशकः




# चन्दमामा

संस्थापकः - 'चक्रपाणिः' सञ्चालकः - 'नागिरेड्डी'



## ताजभवनं विक्रेतव्यम् इति चिन्तनम् आसीत् ।

एतस्य शिरोनाम्नः विषये मनसि सन्देहः उत्पद्यते खलु ? यदि भवन्तः न विश्वसेयुः, एषः कश्चन विनोदः इति वा यदि भावयेयुः तर्हि अपि तत्र किमपि आश्चर्यं नास्ति अस्माकम् । यतः गच्छति काले परिवर्तनानि अपि जातानि सन्ति । अधुना ताजभवनं न केवलं भारतस्य, अपि तु विश्वस्य एव रिक्थम् अस्ति । अतः एव भारतीयाः, 'युनेस्को'सदृश्यः विश्वस्तरीयाः संस्थाः च तस्य रक्षणार्थं सर्वविधप्रयत्नं कुर्वन्तः सन्ति अपि ।

शतात् वर्षेभ्यः पूर्वं परिस्थितिः एवं न आसीत् । प्रथम-स्वातन्त्र्यसङ्ग्रामस्य दमनाय ईस्ट्-इण्डिया-संस्थया स्वस्य सम्पूर्णस्य सामर्थ्यस्य प्रयोगः कृतः १८५७ तमे वर्षे । तेन महती आर्थिकहानिः अपि तया अनुभूता । सा च हानिः कथञ्चित् पूरणीया एव खलु आसीत् ? तदा तेषां मनसि विचारः आगतः यत् 'ताजभवनस्य अमृतशिलाः पृथक्कृत्य विक्रेतव्याः' इति ।

एषः विलक्षणः विचारः कस्यचित् मूर्खस्य दुष्टस्य वा मनसि न स्फुरितः आसीत्, प्रत्युत ईस्ट्-इण्डियासंस्थया निर्मितस्य भारतीयसाम्राज्यस्य अधिपतेः (गवर्नर् जनरल्) मनसि एव स्फुरितः आसीत् !

किन्तु भाग्यवशात् तदा अपि सहृदयाः विवेकिनः केचन आसन् इति कारणेन सः विचारः मध्ये एव स्थगितः अभवत् ।

किन्तु एतादृशः विचारः एव द्योतयति यत् अस्माकं शिल्पानां विषये ईस्ट्-इण्डियासंस्थायाः कीदृशः आदरः आसीत् इति ।



सम्पुटः - १५ मे - १९९८ सञ्चिका - १

प्रतिकृतिमूल्यं रू. ६.०० * वार्षिकं ग्राहकशुल्कं रू. ७२.००



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

अनन्यगत्या - having no alternative
अपत्यम् - child
अवकाशः - chance
अवधानम् - attention
अवमानास्पदम् - shameful
अवितथः - truth
असन्तोषः - unhappinesss
आकांक्षा - desire
आधिपत्यम् - sovereignty
उत्तोल्य - lifting
उष्ट्रः - camal
कतरत् - which of the two
कर्कटकः - a crab
क्रेता - buyer
गलन्तिका - jug
जागरितः - awakened
जीरकम् - cumin seeds
जृम्भणम् - yawn
तिरस्कुर्युः - may be discarded
त्यागपत्रम् - resignation letter
दमनीयः - subdued
दुरवगम्यम् - not understandable
दूरापास्तः - distanced
दैनन्दिनम् - daily
निकटम् - near by
निगीर्णवान् - swallowed
निर्विण्णः - grieved
परिवारः - entourage
मतदानाधिकारः - voting right
मतिभ्रान्तः - mad
मधु - honey
मरीचिका - chilley
मानचित्रम् - map
यवागूः - porridge
याता - sister-in-law
योद्धा - warrior
वक्षःस्थलम् - chest
वरण्डकः - howdah
विनिमयः - exchange
व्यत्ययः - difference
शिलीन्ध्रः - meeshrom
सन्धिः - treaty

वार्ताविशेषः

# स्त्रीणां मताधिकारं कल्पितवतः देशस्य प्रधानमन्त्रिपदवी महिलायै

न्यूजिल्याण्ड्देशस्य प्रथमप्रधानमन्त्रिणीत्वेन डिसेम्बर्मासस्य ८ दिनाङ्के श्रीमती जेन्निषिप्लेवर्या शपथग्रहणं कृतवती । एतदत्र स्मर्तव्यं यत् जगति ऐदम्प्राथम्येन (१८९३तमे क्रिस्ताब्दे) महिलाभ्यः मतदानाधिकारं न्यूजील्याण्ड्देशः एव कल्पितवान् आसीत् ।

१९५२तमे क्रिस्ताब्दे जाता जन्नीफर् शिक्षकपदवीं प्राप्य १९७२तः १९७६तमवर्षपर्यन्तं विद्यालये अध्यापिकात्वेन कार्यं कृतवती । कञ्चित् कृषिकं परिणीय कृषौ तस्य साहाय्यम् अपि कृतवती सा । तथापि तस्याः दृष्टिः सदापि राजकीयक्षेत्रे एव भवति स्म । मित्राणां प्रोत्साहेन सा १९७५तमे वर्षे राष्ट्रियपक्षस्य सदस्यतां प्राप्य पक्षकार्येषु विशेषासक्तिं वहन्ती अध्यक्षस्य जेम्बोग्लर्वर्यस्य अवधानम् आकृष्टवती । तस्याः नायकत्वलक्षणम् उत्साहं च दृष्ट्वा बोग्लर्वर्यः चिन्तितवान् यत् एषा अग्रे कदाचित् मम प्रतिस्पर्धिनी अपि भवितुम् अर्हति इति । १९९७तमे वर्षे तस्य सन्देहः अक्षरशः अवितथः जातः ।



१९८७तमे वर्षे जेन्नीवर्या शासनसभार्थं चिता जाता । १९९०तमे वर्षे न्यूजिल्याण्ड्प्रथमपक्षस्य (फस्ट् पार्टी) मैत्रीं सम्पाद्य राष्ट्रियपक्षस्य नायकः बोग्लरः प्रधानमन्त्री जातः । प्रथमपक्षस्य नायकः विन्स्टन्पीटरसः उपप्रधानमन्त्री जातः । बोग्लरः जेन्नीवर्यां समाजकल्याणविभागीयां सचिवां कृतवान् । प्रजानां विरोधं सहमाना एव सा तत्क्षेत्रे कांश्चन परिष्कारान् कृतवती । ततः सा १९९३तमे वर्षे आरोग्यविभागस्य, १९९६तमे वर्षे सञ्चार-विभागस्य च सचिवा जाता । तत्तत्क्षेत्रे अपि सा कांश्चन परिष्कारान् कृतवती । तस्याः जनप्रियता यद्यपि ह्रासं गच्छन्ती आसीत्, तथापि सा अत्युत्तमपदवीं प्राप्तुम् अवकाशं प्रतीक्षमाणा आसीत् ।

बोग्लरः यदा विदेशप्रवासनिरतः आसीत् तदा जेन्निवर्या राष्ट्रियपक्षीयाणां बहूनां शासकानां बलं स्वानुकूलं कृतवती । ततः तत्र प्रबलध्वनिः उत्पन्नः यत् बोग्लरः त्यागपत्रं दद्यात् इति । अनन्यगतिकतया बोग्लरः त्यागपत्रं दत्तवान् ।

जेन्निवर्या प्रथमपक्षेण सह समालोच्य तस्य पक्षस्य सहकारं दृढीकृत्य स्वयं प्रधान-मन्त्रिणी जाता । प्रथमपक्षीयः नायकः यथापूर्वम् उपप्रधान-मन्त्री जातः । भूतपूर्वप्रधान-मन्त्रिणे जेन्निवर्या विदेश-वाणिज्यविभागं दत्तवती ।

प्रधानमन्त्रिण्या जेन्निवर्यया पञ्चांशात्मकः कार्यक्रमः उद्घोषितः । कुटुम्बानां सामाजिकमूल्यानां वर्धनं, सदस्यतासङ्ख्यां न्यूनीकृत्य (प्रकृतसदस्यतासङ्ख्या - १७०) शासनसभाव्यये न्यूनतासम्पादनं, शिक्षणक्षेत्रस्य वैद्यकीयक्षेत्रस्य च अभिवृद्ध्यर्थं विशेषावधान-दानम्, करभारे न्यूनतासम्पादनम् इत्यादयः तत्र प्रमुखाः अंशाः ।

१९९९तमे वर्षे न्यूजिल्याण्ड्देशे निर्वाचनं प्रवर्तिष्यते । अद्यतनपरिस्थितिं मनसि निधाय समीक्षकाः अभिप्रयन्ति यत् विरोधपक्षभूतस्य श्रमिकपक्षस्य एव जयः अधिकतया सम्भाव्यते इति । विरोधपक्षस्य अपि नायकत्वं महिलायाः एव, श्रीमती हेलेन्क्लार्क्वर्यायाः । अतः अग्रिमे निर्वाचने यः कोऽपि पक्षः जयं प्राप्स्यति चेदपि प्रधानमन्त्रिपदवी कयाचित् महिलया एव अलङ्करिष्यते इति राजकीयव्यवहारस्य समीक्षकाः अभिप्रयन्ति ।



# मन्त्रवादिन्याः पेटिका

मौक्तिकवणिजः मुरहरस्य चत्वारः पुत्राः । ज्येष्ठाः त्रयः अपि बुद्धिमन्तः आसन् । ते पितुः वाणिज्ये साहाय्यं कुर्वन्ति स्म । अन्तिमः पुत्रः वेङ्कटेशः मन्दबुद्धिः आसीत् । सर्वे तं 'मन्दमतिः' इति उपहसन्ति स्म । अतः गच्छता कालेन वेङ्कटेशः 'मन्दमतिः वेङ्कटेशः' इत्येव परिचितः जातः । बाल्ये एव वेङ्कटेशस्य माता मृता आसीत् । मुरहरः पुत्रं वेङ्कटेशं बहु इच्छति स्म ।

ज्येष्ठपुत्रत्रयस्य अपि विवाहः सम्पन्नः । स्नुषाः एव कुटुम्बस्य कार्यभारस्य निर्वहणम् आरब्धवत्यः । श्वशुरः वेङ्कटेशम् अधिकम् इच्छति स्म यत् सः विषयः स्नुषाणां कोपाय भवति स्म ।

यदि वेङ्कटेशस्य विवाहः भविष्यति तर्हि तस्मिन् परिवर्तनं भवेत् इति मुरहरस्य चिन्तनम् अपेक्षा च । परन्तु वेङ्कटेशस्य विषयं ज्ञातवत्सु ग्रामजनेषु कोऽपि स्वपुत्रीं तस्मै दातुं सिद्धः न आसीत् । वेङ्कटेशस्य विवाहचिन्तया एव मुरहरः दिवं गतः ।

तदनन्तरं वेङ्कटेशस्य कष्टकालः आरब्धः । तस्य भ्रातृजायाः तेन सर्वाणि कार्याणि कारयन्ति स्म ।

एकदा पतीनाम् अनुपस्थितौ वेङ्कटेशस्य भ्रातृजायाः तिस्रः अपि भोजनशालायाम् उपविष्टवत्यः ।

''सर्वथा अनुपयोगी एषः वेङ्कटेशः मूषकः इव गृहे जीवन् अस्ति । आजीवनम् एतस्य पालनं महते क्लेशाय एव'' इति उक्तवती ज्येष्ठा भ्रातृजाया ।

''एतस्मै परममूर्खाय कोऽपि पुत्रीं न ददाति । यदि कोऽपि दद्यात् तर्हि अपि पत्नीसहितः एषः अस्माभिः एव पोषणीयः स्यात्'' इति उक्तवती द्वितीया भ्रातृजाया ।

''सः वृद्धः वराकस्य एतस्य पालन-

'अनामिका'

दायित्वम् अस्मासु आरोप्य अस्मान् कष्टसागरे पातितवान्'' इति उक्तवती तृतीया भ्रातृजाया ।

'कथञ्चित् वेङ्कटेशस्य पीडातः मुक्ताः भवेम' इति परस्परं वार्तालापं कृतवत्यः ताः यातरः ।

तावता कार्यं कृत्वा श्रान्तः वेङ्कटेशः एतासां समीपम् आगत्य - ''महती बुभुक्षा । खादितुं यत्किमपि दीयताम्'' इति उक्तवान् ।

अनुक्षणं तिस्रः अपि भ्रातृजायाः वेदनाम् अभिनयन्त्यः प्रकोष्ठे कटं प्रसार्य शयितवत्यः । ताः दृष्ट्वा उद्विग्नः वेङ्कटेशः - ''भवतीनां किम् अभवत् ? अनारोग्यं वा ? पिता इव भवत्यः अपि किं मृताः भवन्ति ?'' इति पृष्टवान् ।

''मम शिरसि कोऽपि मुद्गरेण ताडयति इव । महती पीडा मम । एतदर्थं श्यामवर्णस्य सर्पस्य दंष्ट्रां दग्ध्वा तस्य धूमः स्वीकरणीयः । अन्यथा एषा पीडा न निर्गच्छति'' इति उक्तवती ज्येष्ठा भ्रातृजाया ।

''महतः शिलाखण्डस्य अधः अस्मि इव अनुभवं प्राप्नोमि अहम् । उदरे महती वेदना भवन्ती अस्ति । एतदर्थं व्याघ्रस्य क्षीरेण जीरकं मिश्रीकृत्य तत् पातव्यम् । तदा एव वेदना निर्गच्छति'' इति उक्तवती द्वितीया भ्रातृजाया ।

''सिकताभिः पूरिते इव नेत्रे ज्वलतः । एतदर्थं ब्रह्मराक्षस्याः शृङ्गस्य पिष्टेन शरीरं लेपनीयम् । तदा एव एषा पीडा शान्ता भवेत्'' इति उक्तवती तृतीया भ्रातृजाया ।



एताभिः पीडाभिः स्वयं पीडितः इव दुःखम् अनुभवन् वेङ्कटेशः ताः उद्दिश्य - ''भ्रातृजायाः ! धनं ददतु । आपणं गत्वा आवश्यकानि सर्वाणि वस्तूनि आनेष्यामि'' इति उक्तवान् ।

''एतानि आपणे न लभ्यन्ते । अरण्ये भवन्ति एतानि । भवतः अग्रजानां तु किञ्चित् अपि समयः नास्ति । तत्कारणतः ते अरण्यं गत्वा एतानि आनेतुं न शक्नुवन्ति । अतः एतया पीडया अस्माभिः मरणम् एव प्राप्तव्यम्'' इति उक्त्वा उच्चैः रोदनम् आरब्धवत्यः ताः भ्रातृजायाः।

तासां पीडां द्रष्टुम् अशक्तः मृदुहृदयः वेङ्कटेशः - ''अहम् इदानीम् एव अरण्यं गत्वा सर्वाणि वस्तूनि आनेष्यामि'' इति वदन् ततः प्रस्थितवान् एव ।

तस्य गमनसमनन्तरम् एव उत्थाय -



''अद्य वेङ्कटेशः निश्चयेन सर्पेण दष्टः भविष्यति'' इति सन्तोषेण उक्तवती ज्येष्ठा भ्रातृजाया ।

''यदि सः सर्पेण दष्टः न भविष्यति तर्हि निश्चयेन व्याघ्रेण मारितः भविष्यति'' इति आनन्देन उक्तवती द्वितीया भ्रातृजाया ।

''यदि उभयथा अपि न भविष्यति तर्हि निश्चयेन ब्रह्मराक्षसी तं खादिष्यति एव'' इति सोत्साहम् उक्तवती तृतीया भ्रातृजाया ।

वेङ्कटेशः सर्प-व्याघ्र-ब्रह्मराक्षसीनाम् अन्वेषणं कुर्वन् अरण्ये किञ्चिद्दूरं यावत् गतवान् । तदा एव सर्वत्र अन्धकारः प्रसृतः । सः कांश्चन सर्पान् ग्रहीतुं प्रयत्नं कृतवान् । परन्तु ते श्यामवर्णीयाः न आसन् इति कारणतः तान् न गृहीतवान् सः । ततः सः अरण्ये बहुदूरं यावत् गतवान् । तथापि सर्वत्र शशशृगालादयः एव तेन दृष्टाः, न तु व्याघ्रादयः ।

सः महत्या बुभुक्षया पीडितः सन् - ''अये ब्रह्मराक्षसि ! कुत्र अस्ति भवती ? मम पुरतः आगच्छतु तावत्'' इति उच्चैः उक्तवान् ।

तस्मिन् एव प्रदेशे गिरेः उपरि कुटीरं निर्माय स्वपुत्र्या सह निवसति स्म मन्त्रवादिनी महादेवी । सा एतं शब्दं श्रुतवती । महादेवी दीपं गृहीत्वा बहिः आगत्य - ''कः भवान् ? अर्धरात्रे महादेव्याः मम गृहस्य समीपम् आगत्य उच्चैः कोलाहलं कुर्वन् अस्ति खलु ! कियत् धाष्ट्यं भवतः !'' इति उक्तवती ।

वेङ्कटेशः महादेवीम् आश्चर्येण पश्यन् - ''एतं प्रदेशं परितः श्यामवर्णस्य सर्पाः, महाव्याघ्राः, राक्षसाः वा न निवसन्ति किम् ?'' इति पृष्टवान् ।

''तेषां सर्वेषाम् अपेक्षया श्रेष्ठा घोरा मन्त्रवादिनी महादेवी अहम् एव अस्मि खलु ? भवतु । एतस्मिन् अकाले एतानि किमर्थम् आवश्यकानि भवते ?'' इति आश्चर्येण पृष्टवती महादेवी ।

वेङ्कटेशः स्वस्य भ्रातृजायानां पीडाः, तासां परिहारोपायान् च उक्त्वा - ''तत्सर्वं स्वीकृत्य मया इदानीम् एव गन्तव्यम् । ताः बहुसमयं यावत् पीडाम् अनुभोक्तुं न शक्नुवन्ति'' इति उक्तवान् ।

'एषः अत्यन्तं मुग्धः अस्ति । एतस्य मारणार्थं दुष्टाभिः भ्रातृजायाभिः कृताः उपायाः एते' इति ज्ञातवती महादेवी ।

''भवान् जन्मतः साहसी इति मन्ये ।

इदानीं भवान् बुभुक्षितः अस्ति खलु । बुभुक्षानिवारणम् आदौ करणीयम् । आगच्छतु । एताः रोटिकाः प्रथमं खादतु'' इति वदन्ती तं मञ्चे उपवेशितवती ।

अनन्तरं महादेवी एकस्यां कांस्य-स्थालिकायां चतस्रः रोटिकाः, किञ्चित् शिलीन्ध्रस्य व्यञ्जनं च स्थापयित्वा आनीय वेङ्कटेशाय दत्तवती । सः शीघ्रं तत्सर्वं समाप्य मधुरजलं पीत्वा - ''अम्ब ! अरण्यकुक्कुटस्य मांसस्य खादनस्य अनन्तरं ग्रामकुक्कुटस्य मांसं रसविहीनम् इव भासते'' इति सन्तोषेण उक्तवान् ।

तत् श्रुत्वा उच्चैः हसन्ती महादेवी - ''वत्स ! तत् कुक्कुटस्य मांसं न, अपि तु शिलीन्ध्रस्य व्यञ्जनम् । अत्यन्तं रूपवती मम पुत्री स्वर्णमञ्जरी एव तत् व्यञ्जनं सज्जीकृतवती'' इति उक्तवती ।

कुटीरात् बहिः श्रुतेन सम्भाषणेन स्वर्णमञ्जर्याः निद्राभङ्गः तावता जातः । सा शयाना एव - ''अम्ब ! नेपालतः भवतः गुरुः आगतः किम् ? इदानीं विद्यमानं मन्त्रज्ञानम् अपर्याप्तं किम् ? इदानीम् एव मन्त्रवादिन्याः पुत्री इति कारणतः मां परिणेतुं कोऽपि अग्रे न आगच्छति । भवत्याः पुत्री अभवम् इति कारणतः वनवासिनी इव आजीवनम् एतस्मिन् कुटीरे एव मया जीवनं यापनीयम् आपतितम्'' इति उक्तवती कोपेन ।

महादेवी किमपि उत्तरं न दत्तवती । सा वेङ्कटेशम् उद्दिश्य - ''वत्स ! प्रातःपर्यन्तं भवान् एतस्य मञ्चस्य उपरि एव निद्रां करोतु । प्रातः भवता अपेक्षितानि वस्तूनि



अहम् आनीय दास्यामि'' इति उक्त्वा मन्त्रदण्डेन कुटीरं परितः एकां रेखां लिखितवती । अनुक्षणं तत्र अग्निः उत्पन्नः ।

''भयं मास्तु । अग्निः अस्ति चेत् कोऽपि प्राणी अत्र न आगमिष्यति'' इति उक्त्वा महादेवी कुटीरस्य अन्तः गतवती ।

अनुक्षणं वेङ्कटेशः निद्रितः जातः । निद्रां कर्तुं प्रयतमानां स्वर्णमञ्जरीम् उद्दिश्य महादेवी उक्तवती - ''अनन्तरं निद्रां करोतु । प्रथमं बहिः शयानं युवकं दृष्ट्वा तस्य परिणयार्थं भवत्याः अङ्गीकारः अस्ति वा न वा इति वदतु'' इति ।

स्वर्णमञ्जरी कुटीरस्य द्वारम् उद्घाट्य दृष्टवती । मन्दप्रकाशे शयानः सुदृढः वेङ्कटेशः मन्मथः इव सुन्दरः दृष्टः तया । लज्जया द्वारं पिधाय अन्तः आगतवतीं पुत्रीं



दृष्ट्वा महादेवी - ''प्रातः तेन युवकेन सह भवत्याः विवाहः भविष्यति । सः यद्यपि मुग्धः, तथापि बहु उत्तमः अस्ति । अपि च अत्यन्तं बुद्धिमत्याः भवत्याः विवाहः पूर्वजन्मनः पुण्यविशेषस्य कारणतः केनचित् मुग्धेन सह भविष्यति इति उक्तवन्तः सन्ति मम गुरवः नेपालभट्टाः'' इति उच्चैः हसन्ती उक्तवती ।

अनन्तरम् अरुणोदयकाले यदा कुक्कुटाः शब्दं कृतवन्तः तदा सा वेङ्कटेशम् उत्थाप्य - ''वत्स, भवान् मम पुत्रीं स्वर्णमञ्जरीं वृणोति चेत् भवता अपेक्षितं सर्वम् अपि वरदक्षिणारूपेण दास्यामि'' इति उक्तवती ।

भ्रातृजायाः पीडामुक्ताः भवन्ति चेत् पर्याप्तम् इति चिन्तितवान् वेङ्कटेशः - ''अस्तु । निश्चयेन तां वृणोमि'' इति उक्तवान् ।

महादेवी अनुक्षणं गिरेः उपरि स्थिते देवालये पुष्पहारविनिमयद्वारा तयोः विवाहं कृतवती । अनन्तरं ग्रामात् एकं शकटम् आनीय वेङ्कटेशं, पुत्रीं च उपवेश्य एकां पेटिकां शकटे स्थापयित्वा वेङ्कटेशम् उद्दिश्य - ''वत्स ! भवतः भ्रातृजायानां निमित्तम् उपायनानि, ताभिः अपेक्षितानि वस्तूनि चापि एतस्यां सन्ति'' इति उक्त्वा तौ प्रेषितवती ।

तस्मिन् दिने सायङ्काले पत्न्या सह आगत्य गृहस्य पुरतः अवतीर्णवान् वेङ्कटेशः । एतावति काले वेङ्कटेशः मरणं प्राप्य परलोकं गतः स्यात् इति चिन्तितवत्यः आसन् तस्य भ्रातृजायाः । परन्तु इदानीम् अत्यन्तं सुन्दर्या वध्वा सह आगतवन्तं तं दृष्ट्वा ताः नितराम् आश्चर्यचकिताः जाताः ।

शकटचालकः पेटिकाम् आनीय गृहस्य अन्तः स्थापयित्वा गतवान् । वेङ्कटेशेन सह अन्तः प्रवेष्टुम् उद्युक्तां स्वर्णमञ्जरीं द्वारे एव स्थगयित्वा - ''भवती अन्तः प्रविशति चेत् भवत्याः पादौ भग्नौ करिष्यामः । वराकी भवती हावभावादिभिः वशीकृत्य वरदक्षिणया विना एव अस्माकं देवरं वृतवती किम् ?'' इति पृष्टवत्यः ।

''भवतीभिः अपेक्षितं सर्वम् अपि पेटिकायाम् अस्ति इति वदतु इति उक्तवती अस्ति मम श्वश्रूः'' इति वदन् पेटिकां प्रकोष्ठे स्थापितवान् वेङ्कटेशः । तस्य वचनं श्रुत्वा ताः भ्रातृजायाः - 'एषः कथं मरणात् मुक्तः जातः, कथं वा प्राप्तुम्

अशक्यानि अपि वस्तूनि प्राप्तवान्' इति चिन्तयन्त्यः आश्चर्येण मूकाः जाताः ।

कुतूहलं निरोद्धुम् अशक्ता ज्येष्ठा भ्रातृजाया झटिति प्रकोष्ठं प्रविश्य पेटिकाम् उद्धाटितवती । तावता अन्ततः श्याम-वर्णीयः महान् सर्पः फणां प्रसार्य उत्थितवान् । भीता सा अनुक्षणं पेटिकां पिधाय प्रकोष्ठात् बहिः आगत्य - ''किमर्थं द्वारे स्थितवन्तौ भवन्तौ ? अन्तः आगच्छताम्'' इति वदन्ती वेङ्कटेशं स्वर्णमञ्जरीं च स्वागतीकृतवती ।

अनन्तरं द्वितीया भ्रातृजाया शीघ्रातिशीघ्रं प्रकोष्ठं प्रविश्य पेटिकाम् उद्धाट्य दृष्टवती । पेटिकायाः अन्तः तया भयङ्करः व्याघ्रः दृष्टः । भयेन विसंज्ञतां गतवती इव सा । क्षणाभ्यन्तरे कष्टेन कथञ्चित् प्रकोष्ठात् बहिः आगत्य सा - ''किमर्थं भवन्तौ तथा स्थितवन्तौ ? उपविश्यताम्'' इति उक्त्वा मञ्चं दर्शितवती ।

तावता तृतीया भ्रातृजाया अपि प्रकोष्ठं गत्वा पेटिकायाः अन्तः दृष्टवती । तस्यां शृङ्गयुक्ता दीर्घरोमयुक्ता ब्रह्मराक्षसी रक्तनेत्रेण पश्यन्ती जृम्भणं कुर्वती उपविष्टा तया दृष्टा । तां दृष्टवत्याः तृतीय-भ्रातृजायायाः हृदयं क्षणं यावत् स्तब्धम् । कम्पमाना सा धावन्ती बहिः आगत्य वेङ्कटेशं तस्य पत्नीं च उद्दिश्य - ''महती बुभुक्षा स्यात् खलु भवतोः ? पादं प्रक्षाल्य आगच्छताम् । भोजनं परिवेषयामि'' इति उक्तवती ।

तिस्रः भ्रातृजायाः अपि स्वस्थाः जाताः इति भावयन् वेङ्कटेशः - ''भवतीनां वेदना न्यूना जाता इति भासते । एषा पेटिका अस्माकं प्रकोष्ठे एव भवतु । भवतीनां आवश्यकता यदा भवति तदा अपेक्षितं वस्तु स्वीकुर्वन्तु'' इति उक्तवान् ।

''भवन्तौ बालौ । भवद्भ्यां किं दातव्यं भवेत् ? वस्तुतः तु भवतोः योगक्षेमम् अस्माभिः द्रष्टव्यम्'' इति उक्तवत्यः भ्रातृजायाः ।

महादेवी जानाति स्म यत् यावत् पेटिका एतयोः प्रकोष्ठे भविष्यति तावत् पुत्री-जामात्रोः किमपि कष्टं न भविष्यति, तौ यथा इच्छतः तथैव सर्वं प्रचलिष्यति इति । वस्तुतः तया यथा चिन्तितं तथैव प्रवृत्तम् अपि ।



# अधिकस्य आधिक्यम्

पूर्वं वरदराजपुरं गौतमसेनः नाम राजा पालयति स्म । सः महान् शिवभक्तः आसीत् । यः कोऽपि कलावित् तस्य आस्थानम् आगत्य स्वस्य कौशलं यदि प्रदर्शयति तर्हि तस्मै यथायोग्यं पुरस्कारं ददाति स्म सः ।

सौम्यपुरनामके नगरे नागशङ्करः नाम शिल्पी निवसति स्म । उत्तमं देवताविग्रहं निर्माय प्रतिष्ठाप्य अपूर्वैः शिल्पैः युक्तः रमणीयः देवालयः निर्मातव्यः इति तस्य प्रबला इच्छा आसीत् । तदर्थं तेन लक्षं सुवर्णनाणकानि अपेक्ष्यन्ते स्म । एतावत् धनं कुतः प्राप्तव्यम् इति तस्य समस्या आसीत् ।

नागशङ्करः बहुधा विचिन्त्य अमृतशिलया एकम् अर्धनारीश्वरविग्रहं निर्मितवान् । तं स्वीकृत्य गौतमसेनसमीपं गतवान् च । तत् शिल्पं दृष्ट्वा नितरां सन्तुष्टः राजा - ''एतस्मै अष्टाधिकैकशताधिकसहस्रं सुवर्णनाणकानि दीयन्ताम्'' इति आदिष्टवान् । तदा मन्त्री कोषागारतः अष्टाधिकैकशताधिकसहस्रं सुवर्णनाणकानि आनीय नागशङ्कराय दातुम् उद्युक्तः ।

वस्तुतः तु नागशङ्करः भावितवान् आसीत् यत् सन्तुष्टः राजा लक्षं सुवर्णनाणकानि दद्यात् इति । अतः अल्पस्य धनस्य प्राप्तिसम्भावनां दृष्ट्वा सः किञ्चिदिव असन्तुष्टः । 'किं करणीयम् इदानीम्' इति सः क्षणकालं चिन्तितवान् । तावता कश्चन उपायः स्फुरितः तस्य मनसि ।

सः महाराजं विनयेन निवेदितवान् - ''महाप्रभो ! भवान् अधिकशब्दम् आधिक्येन प्रयुक्तवान् । अधिकशब्दः एकवारम् एव भवतु । अपरत्र षष्ठी भवतु । षष्ठी खलु 'कामधेनुः' इति उच्यते ? अतः मह्यं कृपया अष्टाधिकशतस्य सहस्रं ददातु । तेन अहं सन्तुष्टः भवेयम्'' इति ।

शिल्पिनः वाक्चातुर्यं दृष्ट्वा नितरां सन्तुष्टः राजा - ''भवतः चातुर्येण अहं सन्तुष्टोऽस्मि'' इति शिल्पिनम् उक्त्वा मन्त्रिणम् उद्दिश्य - ''एतस्मै अष्टाधिकशतस्य सहस्रम् एव दीयताम्'' इति आदिष्टवान् ।

एवं राजतः लक्षाधिकसुवर्णनाणकानि प्राप्य उत्कृष्टं देवालयं निर्माय तृप्तिं प्राप्तवान् नागशङ्करः ।





# सम्राट् अशोकः
## १३

*(पितुः बिन्दुसारस्य मरणस्य वार्तां श्रुत्वा उज्जयिनीतः स्वल्पेन सैन्येन सह पाटलीपुत्रं गत्वा आत्मानं मारयितुम् उद्युक्तान् राजकुमारान् संहृत्य अग्रे गतवान् अशोकः । पितुः अन्त्यसंस्कारस्य अनन्तरं ज्येष्ठानाम् अपेक्षानुसारं राज्यभारं स्वीकृतवान् सः । तक्षशिलातः क्रोधाविष्टः सन् आगतः सुषेणः स्वस्य दुरहङ्कारस्य कारणेन राजधान्याः प्रवेशसमये एव मारितः अभवत् । विदिशादेव्याः अनुमतिं प्राप्य ज्येष्ठानाम् अपेक्षानुसारं अन्यां राजकुमारीम् ऊद्वा अशोकः पट्टाभिषिक्तः अभवत् । केषाञ्चित् दिनानाम् अनन्तरं मन्त्रिणः सेनाधिपतेः च वचनस्य प्रेरणया कलिङ्गदेशस्य उपरि आक्रमणं कर्तुं पाटलीपुत्रे युद्धसिद्धताः आरब्धाः । तदनन्तरम्.....)*

पाटलीपुत्रतः उज्जयिनीं गतः वार्तावाहकः दूतः प्रासादं गत्वा विदिशादेव्या मिलित्वा - ''महाराज्ञ्यै नमः'' इति वदन् आदरेण शिरः अवनमय्य नमस्कृतवान् ।

''भोः, अधुना 'महाराज्ञि' इति मम सम्बोधनं न करणीयम् । अशोकस्य नूतना वधूः सन्धिमित्रा एव तादृशं सम्बोधनम् अर्हति । अतः भवान् मया सह सहजतया एव व्यवहरतु । मम तु तद्विषये खेदः नास्ति'' इति उक्तवती विदिशा ।

''देवि ! क्षन्तव्यः अहम् । महाराजः द्वितीयविवाहं कृतवान् इति कारणेन एव भवती महाराज्ञी न इति वक्तुं न शक्यते । भवतीं भवत्याः अपत्यानि च महाराजः सर्वदा स्मरति । द्विवारं स्वस्य प्राणान् रक्षितवतीं भवतीं महाराजः कथं वा विस्मर्तुं शक्नोति ? भवत्याः पुत्रयोः च दर्शने बहु

उत्सुकः अस्ति महाराजः । अचिरात् एव सः कलिङ्गस्य उपरि आक्रमणं कर्तुं प्रस्थास्यते । अतिसमर्थः अपि वीरः, युद्धे किं भवति इति पूर्वमेव ऊहितुं न शक्नोति खलु । अतः ततः पूर्वं सुरक्षतादृष्ट्या भवती पुत्रौ च पाटलीपुत्रे स्थापनीयाः इति महाराजः इच्छति'' इति वदन् सः दूतः अशोकेन दत्तं पत्रं तस्यै समर्पितवान् ।



तस्य वचनस्य श्रवणेन विदिशायाः शान्तं मनः दुःखेन आवृतम् अभवत् । तस्याः मुखं दुःखेन म्लानं जातम् । दूतेन दत्तं पत्रं सा सावधानं पठितवती । पश्चात् तस्याः दृष्टिः किञ्चित्कालं यावत् दूरे एकस्य वृक्षस्य अधः उपविश्य प्रसन्नतया ताड-ग्रन्थानाम् अध्ययने निरतयोः पुत्रयोः निक्षिप्ता अभवत् ।

पश्चात् सा स्वदृष्टिं प्रतिहरन्ती दूतं प्रति - ''भोः ! विक्षुब्धे अस्मिन् नगरे शान्तिं पुनः प्रतिष्ठापितवान् अस्ति मम पतिः । तदर्थं कियन्तं परिश्रमं कृतवान् सः इति अहं जानामि एव । सः बहु जागरूकतया धर्माविरुद्धान् नियमान् कृत्वा तेषां नियमानाम् अन्वयनार्थं प्रामाणिकान् समर्थान् अधिकारिणः नियुक्तवान् आसीत् । अधिकारिणः समर्थाः सन्ति इत्येव अस्मिन् प्रदेशे अधुना जनाः मम पुत्रौ च सुखेन जीवन्तः सन्ति । सहजतया शान्ते अस्मिन् परिसरे उत्तमानां गुरूणां मार्गदर्शने महेन्द्रः सङ्घमित्रा च सम्यक् अध्ययनं कुर्वन्तौ स्तः । रागद्वेषाणां स्थानभूतां, सद्यःकाले एव रक्तसिक्तां राजधानीं प्रति मुग्धयोः सुन्दरयोः बालयोः नयनं किं युक्तं भवेत् ? न केवलं तावत्, मम पूज्यः गुरुः उपगुप्तवर्यः तदा तदा उज्जयिनीम् आगच्छति । तं द्रष्टुं तस्य सेवां कर्तुं च मम पुत्रौ बहु इच्छतः । तादृशः विरलः अवकाशः पाटलीपुत्रे न लभ्यते खलु । अधिकारार्थं पदव्यर्थं च कलहं कुर्वद्भ्यः ऋते अन्येषां केषां वा सहवासः मम बालयोः लभ्येत तत्र ?'' इति उक्तवती चिन्ताक्रान्ता सती ।

एतत् श्रुत्वा दूतः मौनं स्थितवान्, किमपि न उक्तवान् ।

''भोः ! राज्ञः विषये मम महान् अभिमानः, आदरः च अस्ति । परन्तु तस्य एषा जैत्रयात्रा मह्यं किञ्चिदपि न रोचते । मुग्धजनानां क्रूरतया मारणात्, शान्तस्य समृद्धस्य नगरस्य श्मशानरूपेण परिवर्तनात्



च ऋते किम् अन्यत् प्रयोजनम् अस्ति जैत्रयात्रातः ? एतादृशं क्रौर्यं, हिंसा चापि महाराजस्य अशोकस्य नाम्ना प्रचलति खलु इति एव मम अधिकं दुःखम् । युद्धे यासां पतयः, पुत्राः, सहोदराः, पितरः इत्यादयः मृताः भवेयुः तासां महिलानां हृदयविद्रावकं रोदनं कीदृशं स्यात् इति कल्पनेन एव मम हृदयं कम्पते । युद्धे हस्तपादस्य नाशेन, तादृशं कृत्यं कृतवतः शपन्तः ये सैनिकाः प्राणान् त्यजेयुः तान् विस्मर्तुं कथं वा शक्नुमः ? एवं युद्धेन सर्वेषामपि हानिः एव । लाभः कस्यापि नास्ति । अतः यदि युद्धस्य सङ्कल्पं महाराजः परित्यजेत् तर्हि अहं राजधानीं प्रति आगच्छेयम् । एतं विषयं महाराजं भवान् वदतु'' इति गम्भीरतया उक्तवती विदिशा ।

''महाराज्ञि ! करुणापूर्णस्य भवत्याः निवेदनस्य उत्तरं दातुं महाराजस्य अधुना समयः नास्ति इति अहं चिन्तयामि । यतः अधुना एव जैत्रयात्रार्थं सर्वाः सिद्धताः त्वरया प्रचलन्त्यः सन्ति । प्रायः जैत्रयात्रां प्रति गमनात् पूर्वम् एकवारं भवती पुत्रौ च द्रष्टव्याः इति महाराजस्य इच्छा स्यात्'' इति विनयेन उक्तवान् दूतः ।

''तत् शक्येत इति मम अपि निरीक्षा नास्ति । अतः इतः एव महाराजस्य शुभम् आशंसामि । अत्रैव समीपस्थायां गुहायाम् उपविश्य तस्य निमित्तं प्रार्थनां करोमि । किन्तु मम प्रार्थना 'महाराजः युद्धे जयं प्राप्नोतु' इति न, अपि तु तस्मिन् विवेकोदयः भवतु, तस्मिन् ज्ञानस्य वर्धनं भवतु इति, तेन तस्मिन् शान्तभावः उत्पन्नः भवतु इति च । भवान् एतावद्दूरम् आगमनस्य कष्टम् ऊढवान् अस्ति । तदर्थम् अहं भवद्विषये कृतज्ञा अस्मि'' इति उक्तवती ।

दूतः तां पुनः नमस्कृत्य ततः प्रस्थितवान् ।

अशोकः कदाचित् सायङ्काले प्रशान्तसमये प्रासादस्य उपरि अस्तं गच्छन्तं सूर्यं पश्यन् उद्विग्नः सन् अटन् आसीत् । तदा यशः तत्र आगत्य अशोकं नमस्कृतवान् । किन्तु अशोकः तं किमपि न उक्तवान् । तदा यशः - ''महाराज ! किमर्थम् एतादृशं मौनम् ?'' इति तं पृष्टवान् ।

तस्य उत्तररूपेण दीर्घं निःश्वसन् - ''सद्यः एव मया अशुभवार्ताद्वयं श्रोतव्यम्

अभवत्'' इति उक्तवान् अशोकः व्याकुलतया ।

''किं तत् ?'' इति आश्चर्येण पृष्टवान् यशः ।

''कलिङ्गतः अस्माकं गुप्तचरैः आनीता अस्ति प्रथमा अशुभवार्ता । तत्र राज्ञः उत्तराधिकारी मृतः अस्ति इति तु सत्यमेव । तथापि तत्र शक्तिः क्षीणा अस्ति इति तु मिथ्या । कलिङ्गस्य चतुर्विंशतिविभागानाम् अधिकारिणः अपि सङ्घटिताः सन्तः एकस्य शासने यादृशी दक्षता स्यात् तादृश्या दक्षतया शासनं कुर्वन्तः सन्ति । तेषाम् ऐकमत्यम् अभेद्यम् अस्ति । अपि च विशेषप्रशिक्षणेन युक्तं तेषां सैन्यं बहु समर्थम् अस्ति इति श्रूयते । वाणिज्ये अपि अधुना राज्ञः मरणानन्तरमपि वर्धनमेव दृश्यमानम् अस्ति, न तु क्षीणता इत्यपि ज्ञायते'' इति उक्तवान् अशोकः कोपेन ।

''भवतु नाम । द्वितीया अशुभवार्ता का ?'' इति पृष्टवान् यशः ।

''भवतः प्रियभगिनी विदिशा 'पुत्रौ अत्रैव सुखेन भवतः' इति कारणम् उक्त्वा पाटलीपुत्रं प्रति आगमनं निराकृतवती अस्ति'' इति उक्तवान् अशोकः ।

''महाराज ! तया दत्तं कारणं तु योग्यमेव अस्ति खलु ? यतः बालौ वस्तुतः तत्र सन्तोषेण स्तः इति भवान् अपि जानाति । यत्र शान्तिः तृप्तिः च अस्ति तत् स्वर्गतुल्यं भासते एव खलु'' इति वदन् यशः मध्ये स्वस्य वचनं किञ्चित्कालं यावत् स्थगयित्वा पुनः शान्ततया उक्तवान् - ''महाराज ! भवान् अशुभवार्ताद्वयं



श्रावितवान् । अहं तृतीयाम् अशुभवार्तां वक्तुकामः अस्मि । तदर्थम् आदौ एव भवतः क्षमां प्रार्थये'' इति ।

''का सा दुर्वार्ता ?'' इति भावेन यशं दृष्टवान् अशोकः ।

''अस्माकं वाणिज्यनौकाः विविधानि वस्तूनि स्वीकृत्य वाणिज्यार्थं सुवर्णद्वीपान् प्रति गतवत्यः आसन् इति भवान् जानाति एव । किन्तु जावा, सुमात्रा, बालि इत्यादिषु द्वीपेषु अस्माकं वणिजः एकमपि वस्तु विक्रेतुम् अशक्ताः जाताः सन्ति । तत्रत्याः कलिङ्गदेशात् ऋते अन्येभ्यः वस्तूनि क्रेतुं न इच्छन्ति । तैः सह प्राचीनकालतः कलिङ्गस्य वणिजां उत्तमः सम्बन्धः अस्ति इति श्रूयते'' इति उक्तवान् यशः ।

''सः सम्बन्धः नष्टः यथा स्यात् तथा



अस्माभिः करणीयम् । सद्यः एव कलिङ्गस्य उपरि आक्रमणं करिष्यामः एव। तस्य स्वायत्तीकरणस्य अनन्तरम् अस्माकम् अनुमतिः अस्ति चेदेव 'कलिङ्गस्य वणिजः तैः द्वीपजनैः सह वाणिज्यम् अनुवर्तयितुम् अर्हन्ति । सर्वाः समस्याः मम जैत्र- यात्रायाः सङ्कल्पं द्रढयन्त्यः सन्ति । अतः उत्तमाः सज्जताः क्रियन्ताम्'' इति आदिष्टवान् अशोकः कोपेन ।

अशोकः स्वस्य वेदनां निराशां च गोपयितुं तथा आवेशेन वदन् अस्ति इति यशः ज्ञातवान् । किन्तु अशोकं प्रति किमपि वक्तुम् अशक्तः सः मौनम् आश्रितवान् ।

* * * * *

दयानद्याः तीरे विराजमाना अस्ति सुन्दरी नगरी तोशाली । नगरस्य सीमायाम् एवं लघुपर्वताः, सुन्दराणि उद्यानानि च सन्ति । पुराणकालतः 'सरस्वती' इति नाम्ना प्रसिद्धा नदी एव दयानदी । पूर्वं सरस्वतीनद्याः तीरे दधीचिः नाम ऋषिः वसति स्म । तदा वृत्रः नाम राक्षसः बलिष्ठः सन् मनुष्यान् देवताः च बहुधा पीडयन् आसीत् । ऋषीणां मुनीनां च यागादिषु सः बहुधा विघ्नं जनयति स्म । तं मारयितुम् इन्द्रः अपि समर्थः न अभवत् । तपोनिधेः ऋषेः दधीचेः अस्थिभिः रचितेन वज्रायुधेन एव वृत्रासुरस्य मरणं भविष्यति इति ध्यानसमये ज्ञात्वा इन्द्रः तं विषयं दधीचिम् उक्तवान्, अस्थीनि दातव्यानि इति प्रार्थितवान् च । जनसेवां जनार्दनसेवां मन्यमानः दधीचिः इन्द्रस्य प्रार्थनां पुरस्कुर्वन् ध्याननिरतः सन् योगमार्गेण शरीरं परित्यक्तवान् । अनन्तरं दधीचेः कशेरुं स्वीकृत्य वज्रायुधं कृतवान् इन्द्रः । ऋषेः तपोबलेन युक्तैः अस्थिभिः निर्मितेन वज्रायुधेन वृत्रः हतः । तेन मनुष्याणां, देवानाम्, ऋषिमुनीनां च कष्टानां निवारणम् अभवत् ।

दधीचेः त्यागगुणः, तस्य पवित्रं स्मरणं च तोशाल्याः प्रजाः आदर्शपुरुषान् करोति स्म । अन्येषां साहाय्यं कर्तुं ते सर्वदा बद्धकटयः भवन्ति स्म । यद्यपि तत्र ब्राह्मणाः अधिकाः आसन्, तथापि ते अल्पसंख्याकान् बौद्धान् जैनान् च आदरेण एव पश्यन्ति स्म । सुप्रसिद्धः जैनमुनिः ऋषभनाथतीर्थङ्करः एतन्नगरस्थः एव आसीत् । तोशाल्याः प्रजाः नगरस्य

मध्यभागे तस्य महतीं शिलामूर्तिं प्रतिष्ठापितवत्यः आसन् । तां मूर्तिं सर्वे जनाः मतभेदेन विना परमया श्रद्धया पूजयन्ति स्म ।

मौर्यवंशस्थेभ्यः पूर्वं मगधदेशे शासनं कृतवान् कश्चित् राजा तां मूर्तिं पाटलीपुत्रं प्रति बलात् नीतवान् आसीत् । अतः कलिङ्गस्य राजा द्वित्रवारं पाटलीपुत्रस्य उपरि आक्रमणं कृत्वा तां मूर्तिं प्रत्यानेतुं प्रयत्नं कृतवान् । किन्तु सः सफलः न अभवत् । तदा जैनाः राज्ञः सान्त्वनं कृत्वा - ''सहनायां क्षमायां च वयं सर्वेषाम् आदर्शाः स्मः । ऋषभनाथतीर्थङ्करस्य मूर्तिः पाटलीपुत्रस्य शोभां वर्धयति इत्यत्र संशयः एव नास्ति । ऋषभनाथवर्ये अस्माकं भक्तिः, न तु मूर्तिमात्रे । अतः सा मूर्तिः तत्रैव भवतु नाम । वयं तीर्थङ्करस्य अन्यां रमणीयां मूर्तिं निर्माय अत्र प्रतिष्ठापयेम चेत् वरम् इति भासते अस्माकम्'' इति उक्तवन्तः ।

एवं मूर्तेः प्रतिष्ठापनस्य प्रयत्नः यदा प्रचलन् आसीत् तदा एव अन्तिमस्य कलिङ्गराजस्य मरणम् अभवत् ।

राज्ञः मरणस्य अनन्तरं राज्यस्य शान्तेः भद्रतायाः च रक्षणे, वाणिज्यस्य अभिवर्धने च निरताः सन्तः सर्वे मण्डलाधिकारिणः राज्यस्य सम्पदः वर्धने एव निरताः अभवन् ।

तदा अकस्मात् एकस्मिन् दिने गूढचराः वार्ताम् आनीतवन्तः यत् कलिङ्गस्य सीमाप्रदेशेषु मगधस्य सैनिकाः अधिकसंख्यया मिलन्तः सन्ति इति । तां वार्तां श्रुत्वा मण्डलाधिकारिणाम् आश्चर्यम् अभवत् । ''मगधस्य सेना अन्यत्र गमनाय अत्र आगता अस्ति, उत अत्रैव आगन्तव्यम् इति उद्देशेन आगता अस्ति ?'' इति विषये गम्भीरतया



चिन्तनम् आरब्धवन्तः ते मण्डलाधिकारिणः ।

तावति काले कूलङ्कशा नदी इव मगधसेना कलिङ्गराज्यं प्रविष्टवती एव । मगधसैनिकाः महता वेगेन अग्रे आगताः । निरपराधिनीः प्रजाः मारयन्तः, स्वस्य मार्गे विद्यमानानि सर्वाणि गृहाणि अग्निना ज्वालयन्तः राजधानीं तोशालीं प्रति प्रस्थितवन्तः ते ।

एतां वार्तां ज्ञात्वा - ''अनीतिकरम् इदम् आक्रमणम् अस्माभिः सम्मुखीकरणीयम् एव । मगधसेना अस्माभिः कथञ्चित् प्रतिप्रेषणीया एव'' इति उक्तवान् कश्चित् वृद्धः नायकः ।

शिष्टाः सर्वे अपि अधिकारिणः एककण्ठेन तस्य वचनम् अङ्गीकृतवन्तः । अतः सर्वे अधिकारिणः अनुक्षणं स्वस्वमण्डलानि गत्वा मगधानां दुराक्रमणं निरुद्ध्य तेषां प्रतिप्रेषणाय सिद्धताः आरब्धवन्तः । एतस्य दुराक्रमणस्य सम्मुखीकरणाय प्रत्येकस्मात् गृहात् एकेन वा आगन्तव्यं, तदर्थं परेद्यवि एव तोशालीं प्रति आगन्तव्यमिति सर्वेषु ग्रामेषु नगरे च दूतानां द्वारा सडिण्डिमघोषम् उद्घोषणं कारितवन्तः ते ।

तत् उद्घोषणं श्रुत्वा यद्यपि जनाः आदौ भीताः, तथापि देशभक्त्यै स्वामिनिष्ठायै च प्रसिद्धाः ते स्वगृहेषु विद्यमानानि विविधानि आयुधानि गृहीत्वा तोशालीं प्रति प्रस्थितवन्तः ।

तोशालीनगरं यदि शत्रूणां वशं भवेत् तर्हि समग्रः देशः एव शत्रुवशः भविष्यति । अतः कथमपि राजधानी रक्षणीया इति सङ्कल्प्य बालाः, तरुणाः, वृद्धाः इत्यादयः सर्वेऽपि वयोभेदेन विना गणरूपेण राजधानीं प्रति आगताः ।

प्रशान्तेभ्यः ग्रामेभ्यः सर्वे पुरुषाः युद्धार्थं प्रस्थितवन्तः आसन् खलु ? अतः ग्रामस्थाः महिलाः दुःखेन भयेन च रोदनम् आरब्धवत्यः ।

शत्रूणां सम्मुखीकरणाय राजधान्यां सम्मिलितानां जनानां कृते युद्धविद्यायाः पाठनं, योग्यं शिक्षणं च आरब्धम् । तथैव सैन्ये स्थितानां सैनिकानां विशेषप्रशिक्षणम् अपि आरब्धम् ।

- *(अनुवर्तते)*






# घण्टात्मकं गानम्

दृढव्रती त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान् । ततः यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान् च । तदा शवान्तर्गतः वेतालः अवदत् - ''राजन् ! मनुष्याः यदा शारीरकव्याधिना पीडिताः भवन्ति तदा अन्यव्यक्तिः सुलभतया तत् अभिज्ञातुं शक्नोति । वैद्याः तेषां चिकित्साम् अपि कर्तुं शक्नुवन्ति । परन्तु मानसिकव्याधयः सुलभतया अभिज्ञातुं न शक्याः । यतः व्यक्तेः मनः अत्यन्तं क्लिष्टं दुरवगम्यं च अस्ति । सर्वेऽपि स्वानुभव-विश्वासानाम् आधारेण एव अन्येषां मौल्यमापनं कुर्वन्ति । कश्चित् स्वस्य अहङ्कारं, चञ्चलत्वं च आत्मगौरवम् इङ्गितज्ञानं च मन्यते । अन्यः कश्चित् तौ एव अहङ्कारं मूर्खत्वं च मन्यते । एतद्दशस्य

## वेतालकथा



वचनस्य उद्देशः कः इति भवान् पृच्छेत् । भयङ्करे एतस्मिन् रात्रिकाले घोरे श्मशानमार्गे भवता अनुभूयमानस्य कष्टस्य कारणीभूतः कश्चित् अहङ्कारी चपलः वा स्यात् इति संशयः मम मनसि उदितः अस्ति । भवतः जागरणार्थं तुम्बुरनामकस्य सङ्गीतविदुषः कथां श्रावयामि । श्रद्धया शृणोतु तावत्'' इति ।

ततः वेतालेन कथा आरब्धा -

पूर्वं तुम्बुरनामकः कश्चित् सङ्गीतविद्वान् आसीत् । सः स्वजीवनं सङ्गीतसाधनार्थम् एव समर्पितवान् आसीत् । सः यदा दैवभक्त्या आविष्टः, प्रकृतिसौन्दर्येण आकृष्टः च भवति स्म तदा तस्मात् सङ्गीतसुधा प्रवहति स्म । सः बहूनां नूतनगीतानां रचयिता आसीत् । तदीयानि गीतानि बहूनां मुखेषु विलसन्ति स्म ।

कदाचित् तस्य देशस्य राजा तुम्बुरं प्रार्थितवान् यत् भवता आस्थानविदुषः पदवी अलङ्करणीया इति । एतं प्रस्तावम् अनङ्गीकुर्वन् तुम्बुरः - ''प्रभो ! विहार-समये मम मनस्सन्तोषार्थं दीर्घसमयं यावत् गायामि । तदा मम सङ्गीतं सर्वे मानवाः पशुपक्षिणः वा यथेच्छं श्रोतुम् अर्हन्ति । परन्तु मानवैः सह उपविश्य मानवानां कृते एव यदा गातव्यं भवति तदा अहं कदापि घण्टातः अधिककालं न गायामि । एषः मम स्वभावः । अतः अहम् आस्थाननियमैः आत्मानं बन्धुं सर्वथा न इच्छामि'' इति उक्तवान् ।

''अस्तु नाम । घण्टां यावत् भवता मम आस्थाने सकृत् वा गातव्यम् एव'' इति अनुरोधपूर्वकं प्रार्थितवान् राजा । अन्ते तुम्बुरः आस्थाने गानम् अङ्गीकृतवान् ।

अनन्तरं राजा मन्त्रिणम् आहूय - ''तुम्बुरः नाम महाविद्वान् अस्माकम् आस्थाने गास्यति । सः घण्टाकालमात्रं गानम् अङ्गीकृतवान् अस्ति । अतः अस्माभिः तादृश्यः सिद्धताः करणीयाः, यासां कारणतः तस्य मनसि शाश्वतम् अत्रैव स्थातव्यम् इति इच्छा उत्पद्येत'' इति उक्तवान् ।

तुम्बुरस्य गानार्थम् आवश्यक्यः सर्वाः सिद्धताः कृताः । तस्य उपवेशनार्थं रत्नकम्बलं प्रसारितम् । तस्य आलम्बनार्थं कौशेयमयम् उपधानं स्थापितम् । तस्य गानसमये नर्तितुं चतस्रः सुन्दर्यः नर्तक्यः चिताः । निरन्तरचामरसेवार्थं द्वौ बल-

शालिनौ नियुक्तौ । तस्य दिनस्य कार्यक्रमस्य निमित्तं ग्रामप्रमुखाः सर्वे अपि आहूताः आसन् । गीतस्य स्थगनस्य अनुक्षणं करताडनम् उच्चैः करणीयम् इति सभ्याः सर्वे सूचिताः आसन् । तावदेव न, रुचिकराणां खाद्य-पानीयादीनाम् अपि व्यवस्था कृता आसीत् ।



निश्चिते दिने निश्चिते समये तुम्बुरः सभां प्रविष्टवान् । राजा गत्वा मालार्पणेन तं सत्कृत्य कृताः सर्वाः सिद्धताः तम् उक्त्वा - ''अत्र कोऽपि दोषः अस्ति चेत् कृपया सूचयतु । तं निवारयिष्यामि'' इति उक्तवान् ।

तदा तुम्बुरः हसन् - ''सङ्गीतविदुषः अपेक्षा एका एव । सा तु उत्तमश्रोतॄणाम् उपस्थितिः भवतु इति'' इति उक्त्वा स्वस्थाने उपविश्य सर्वान् उद्दिश्य - ''महाजनाः ! मम गीतानि साम्प्रदायिकानि न । एते स्वराः मया एव सृष्टाः । मया यदि दोषः क्रियते तर्हि तस्य निवारणम् अपि मया एव करणीयम् । यतः अन्यैः स च दोषः अभिज्ञातुं न शक्यते । अतः मम एकाग्रतायाः भङ्गः यथा न भवेत् तथा भवन्तः मौनेन भवन्तु इति प्रार्थये । अहं घण्टां यावत् गास्यामि । श्रद्धया शृण्वन्तु'' इति उक्त्वा रागस्य आलापनम् आरब्धवान् ।

घण्टां यावत् सुश्राव्यं गीतवान् सः । अनन्तरं गानं स्थगयित्वा - ''वचनानुसारम् घण्टां यावत् गीतवान् अस्मि । इदानीं गमनार्थम् अनुमतिं यच्छन्तु'' इति उक्त्वा उत्थितवान् । सर्वे अपि 'भवतः गानम् अत्यपूर्वम् अस्ति । कृपया पुनरेकघण्टां यावत् गायतु' इति तं प्रार्थितवन्तः । तुम्बुरः न अङ्गीकृतवान् । फलाहारं, फलामृतं, राज्ञा दत्तानि उपायनानि च स्वीकृत्य सः ततः निर्गतवान् एव । कृताभिः सिद्धताभिः तुम्बुरः न आकृष्टः इत्यतः राजा खिन्नः जातः ।

सः मन्त्रिणम् उद्दिश्य - ''अयं तुम्बुरः महान् विद्वान् इत्यत्र नास्ति सन्देहः। परन्तु एषः महानुभावः, उत अहङ्कारी, उत चपलचित्तः इति निर्णेतुम् अशक्तः अस्मि । एतम् अनुसृत्य गन्तुं कांश्चन सेवकान् प्रेषयतु । सः कुत्रचित् घण्टातः अधिककालं स्थास्यति चेत् अहं सूचनीयः इति तान् वदतु'' इति उक्तवान् ।

ततः आरभ्य केचन सेवकाः सर्वदा



तुम्बुरस्य अनुसरणम् आरब्धवन्तः । राजास्थाने तुम्बुरेण प्राप्तं विशेषसम्माननं देशे सर्वैः अपि ज्ञातम् । एकैकः अपि तं गृहम् आहूय तस्य गानं श्रोतुम् उत्सुकः आसीत् । तुम्बुरः सर्वेषाम् आह्वानम् अपि अङ्गीकरोति स्म । परन्तु कुत्रापि सः घण्टातः अधिककालं न गायति स्म ।

'तुम्बुरः घण्टातः अधिककालं यथा गायेत् तथा करणीयम् एव' इति बहुजनानां मनसि इच्छा उत्पन्ना । सा तथा तीव्रा जाता यत् - यस्मिन् गृहे तुम्बुरः अधिककालं गास्यति तस्य गृहस्य जनेभ्यः द्विलक्षं सुवर्णनाणकानि उपायनरूपेण दत्त्वा तेषां सम्माननं क्रियते इति केचन धनिकाः उद्घोषणं कृतवन्तः ।

तदनन्तरं तुम्बुरम् अनुसरतां जनानां सङ्ख्या द्विगुणिता जाता । ज्येष्ठाः कीर्त्यै तम् अनुसृतवन्तः । दरिद्राः दारिद्र्य-निवारणार्थं तम् अनुसरन्ति स्म । तुम्बुरः तु सर्वेषां गृहे अपि गायति स्म । परन्तु कुत्रापि घण्टातः अधिककालं न तिष्ठति स्म ।

पूर्वं ये तुम्बुरं निःस्वार्थी दयाशीलः इति च श्लाघन्ते स्म ते एव इदानीं तम् अहङ्कारी चपलचित्तः च इति वदन्ति स्म । यतः 'कस्यचित् दरिद्रस्य गृहे घण्टातः अधिककालं गीयते चेत् तस्य दरिद्रस्य दारिद्र्यं निवारितं भवति' इति ज्ञात्वा अपि सः स्वनियमं न परित्यक्तवान् आसीत् ।

श्रीपुरे सुहासनामकः कश्चित् दरिद्रः आसीत् । सङ्गीतं तस्य प्राणतुल्यम् आसीत् । अनेकवर्षाणि यावत् सः तुम्बुरम् अनुसृत्य एकान्ते तेन गीयमानानि गीतानि श्रद्धया श्रुतवान् आसीत् । तुम्बुरसदृशः सङ्गीतविद्वान् न भूतो न भविष्यति इति सर्वान् वदति स्म सः । 'तादृशः विद्वान् अस्माभिः अनुसरणीयः, न तु सः नियमैः बन्धनीयः । नियमैः बन्धनार्थं यत्नः अन्याय्यः, अविवेकयुक्तः च' इत्यपि वदति स्म सः ।

एतेषु दिनेषु जनाः तुम्बुरम् अहङ्कारी, चपलचित्तः इत्यादिशब्दैः उपहसन्ति इति विषयं ज्ञात्वा नितरां खिन्नः सुहासः एकदा तुम्बुरस्य समीपं गत्वा तम् उद्दिश्य - ''महानुभाव, भवतः दर्शनात् एव अहम् अत्यन्तं सन्तुष्टः अस्मि । भवादृशं महापुरुषं जनाः अहङ्कारिणं वदन्तः निन्दन्ति । एतादृशानि अपवचनानि अहं न सहे । अतः मम गृहम् आगत्य गीत्वा एतादृशेभ्यः

अपवचनेभ्यः भवान् मुक्तः भवतु इति प्रार्थयामि'' इति उक्तवान् ।

तुम्बुरः तं प्रीत्या पश्यन् - ''प्रजानां दारिद्र्यनिवारणं राज्ञः कर्तव्यम् । तत् कार्यं यदि काश्चन सङ्घसंस्थाः,कुर्वन्ति तर्हि अपि तत्र न कोऽपि दोषः । मादृशैः तु कर्तुं योग्यं कार्यं न तत् । कश्चित् माम् अहङ्कारी इति वदति चेत् तत्र मया करणीयं किमपि नास्ति । मया यत् शक्यते तत् अहं करिष्ये । यत् मया न शक्यते तस्मिन् विषये अनावश्यकप्रयत्नान् अहं न करोमि । भवतः गृहे अपि घण्टातः अधिकसमयं न गास्यामि । यदि एतत् भवान् अङ्गीकरोति तर्हि आगमिष्यामि'' इति उक्तवान् ।

''यत् शक्यते तत् करिष्ये इति भवान् उक्तवान् अस्ति । एतावत् एव पर्याप्तं मम'' इति विनयेन उक्तवान् सुहासः । तुम्बुरः गातुं सुहासस्य गृहं गतवान् ।

सुहासः गृहं प्रति कमपि न आहूतवान् आसीत् । गृहे काऽपि विशेषसिद्धता अपि न कृता आसीत् । तस्मै एकम् आसनं दत्त्वा तस्य पुरतः परिवारजनैः सह उपविष्टवान् सुहासः ।

तुम्बुरः गानम् आरब्धवान् । श्रोतारः अपि श्रद्धया शृण्वन्ति स्म । घण्टात्मककालस्य अनन्तरं तुम्बुरः गानस्य स्थगनं कृत्वा - ''घण्टात्मकः कालः अतीतः'' इति उक्तवान् ।

तदा सुहासः विनयेन - ''स्वामिन् ! अवधिः पूर्णः जातः, न तु गीतम् । गीतसमाप्तितः पूर्वम् एव गानस्य स्थगनं न उचितम्'' इति उक्तवान् ।



तुम्बुरः तम् आश्चर्येण पश्यन् सन्तोषेण हसन् अनन्तरं घण्टाद्वयं यावत् स्थगनेन विना गीतवान् । श्रोतारः कृतकृत्याः जाताः ।

दूतद्वारा एतं विषयं ज्ञातवान् राजा सुहासाय द्विलक्षं सुवर्णनाणकानि उपायनरूपेण धनिकानां द्वारा दापयन् अमूल्यानि उपायनानि दत्त्वा तुम्बुरं सत्कृतवान् ।

वेतालः एतां कथां श्रावयित्वा - ''राजन् ! तुम्बुरस्य व्यवहारः न्यायसम्मतः इति न भासते मम । स्वयं राजा यदा 'मम आस्थाने घण्टातः अधिककालं गायतु' इति प्रार्थितवान् तदा एषः निराकृतवान् । जनाः यदा एतत् चपलत्वम्, अहङ्कारः च इति उक्तवन्तः तदा अपि सः तत् निन्दनं न

लक्षितवान् । तादृशः सः सुहासस्य गृहे किमर्थम् अधिककालं गीतवान् ? सुहासस्य दारिद्र्यनिवारणार्थं द्विलक्षं रूप्यकाणि दापयितुं तथा गीतवान् किम् ? यदि एतत् एव सत्यं तर्हि राज्ञः समीपे प्रदर्शितः एतस्य व्यवहारः अहङ्कारयुक्तः इत्येव खलु वक्तव्यं भवति ? एतस्य सन्देहस्य परिहारं जानन् अपि यदि भवान् न वदति तर्हि भवतः शिरः सहस्रधा भग्नं भविष्यति'' इति उक्तवान् ।

तदा त्रिविक्रमः - ''तुम्बुरस्य व्यवहारः सर्वत्र समानः । तस्य सङ्गीतविषयक-विश्वासानुगुणम् अस्ति सः इत्यत्र न कोऽपि सन्देहः । सः यदा राजास्थाने गातुं गतवान् तदा राजा - 'कृतासु सिद्धतासु काऽपि न्यूनता अस्ति चेत् दर्शयतु' इति उक्तवान् । तदा तुम्बुरः 'उत्तमश्रोतारः प्राप्येरन् इत्येव सङ्गीतविदुषः अपेक्षा' इति उक्तवान् । तादृशम् उत्तमश्रोतृत्वं सः सुहासे दृष्टवान् । यदा एषः गानस्य स्थगनं करोति स्म तदा सर्वत्र जनाः पुनरेकघण्टां यावत् गायतु इति वदन्ति स्म, न तु गीतसमाप्तितः पूर्वम् एव गानं स्थगितम् इति । अतः ते उत्तमश्रोतारः इति वक्तुं योग्याः न । केवलं करताडनेन एव तृप्ताः आसन् ते । परन्तु सुहासः तादृशेषु अन्यतमः न आसीत् । गीत-समाप्तितः पूर्वम् एव गानं स्थगितम् इति दर्शितवान् सः उत्तमश्रोता, सङ्गीतप्रियः च आसीत् । एतं विषयं ज्ञातवान् तुम्बुरः पुनः घण्टाद्वयं यावत् गीत्वा तस्य मनस्सन्तोषं वर्धितवान् । सुहासस्य दारिद्र्यनिवारण-विषये चिन्तयामः चेत् भासते यत् तादृशलोकव्यवहारे तुम्बुरस्य विशेषासक्तिः न आसीत् इति । दरिद्राणां गृहेषु घण्टातः अधिककालं गीत्वा दारिद्र्यनिवारणार्थं प्रयत्नः तु अर्थहीनः एव । यतः लोके दरिद्राः अनन्ताः । गानेन एकस्य जनस्य दारिद्र्यं निवारितं चेत् किं वा साधितं भवेत् ? अतः प्रजानां दारिद्र्यनिवारणं राज्ञः कर्तव्यम् इति उक्तवान् अस्ति सः । एतत् सर्वं यदा परिशीलयामः तदा एतत् तु स्पष्टं भविष्यति यत् तुम्बुरः अहङ्कारी चपलचित्तः वा नैव इति'' इति उक्तवान् ।

एवं वदता राज्ञा मौनभङ्गः कृतः आसीत् इत्यतः वेतालः ततः अदृश्यः भूत्वा पुनः वृक्षारोहणं कृतवान् ।





# अत्याशा आत्मनाशाय

मरालदेशस्य राजनर्तकी कदाचित् सन्धिपीडाकारणतः दशाधिकदिनानि आस्थानं प्रति न आगतवती । राजा आदिनं राज्यभारनिर्वहणात् यां श्रान्तिं प्राप्नोति स्म तां राजनर्तक्याः नृत्यस्य दर्शनतः अपनयति स्म । ततः उल्लासं च प्राप्नोति स्म । नित्यकार्यक्रमे जायमानः अल्पः व्यत्ययः अपि तस्य असन्तोषाय भवति स्म ।

नृत्यस्य अदर्शनात् राज्यव्यवहारे अपि राज्ञः आसक्तिः दिने दिने न्यूना जाता । एतत् दृष्ट्वा मन्त्री चिन्ताक्रान्तः अभवत् । 'राजा नर्तक्याः नृत्यस्य दासः जातः खलु !' इति चिन्तयन् सः व्यथाम् अपि अनुभूतवान् ।

'राजनर्तक्याः स्वास्थ्यं कथम् अस्ति इति मया स्वयं द्रष्टव्यम्' इति चिन्तयन् मन्त्री कदाचित् तस्याः गृहं गतवान् । यदा सः गृहं प्राप्तवान् तदा अन्तः प्रचलत् सम्भाषणं तस्य कर्णयोः पतितम् । आश्चर्येण सः तत्रैव स्थितवान् ।

राजनर्तकी मातरं वदन्ती आसीत् - ''अम्ब! दश दिनानि यावत् नृत्यं न दृष्टम् इत्यतः राजा हतप्रभः जातः अस्ति इति श्रूयते । मम उपस्थितेः अपरिहार्यता तेन अनुभूता अस्ति । यद्यपि इदानीम् अहं स्वस्था अस्मि, तथापि इतोऽपि सप्ताहं यावत् अहं राजास्थानं न गमिष्यामि । तावता नितरां निर्विण्णः भविष्यति राजा । तदा मया यत् प्रार्थयिष्यते तत् अवश्यं दास्यते तेन । एतां स्थितिम् अवलम्ब्य मया संस्थानस्य कस्यचित् आधिपत्यं प्राप्स्यते'' इति ।

एतत् श्रुत्वा नर्तक्याः माता - ''न ज्ञायते - कीदृशः कालः उपस्थितः इति । यदा मम तारुण्यम् आसीत् तदा मया अपि नृत्यं क्रियते स्म । महाराजः यत् ददाति तत्

'सुभद्रा'

सन्तोषेण स्वीक्रियते स्म । अन्याः नर्तक्यः अपि एवम् एव कुर्वन्ति स्म । किन्तु इदानीं कालः परिवृत्तः अस्ति । भवादृशीनाम् अभिमानः न कलासु, अपि तु धने । अहो विसङ्गतिः'' इति वदन्ती दीर्घं निश्श्वसितवती ।

एतस्य श्रवणात् मन्त्री वस्तुस्थितिं ज्ञातवान् । सः ततः एव प्रतिनिवृत्य राज्ञः विश्रान्तिगृहं प्रविश्य - ''महाराज ! आस्थानवैद्यः वदति यत् राजनर्तकी इतोऽपि सप्ताहत्रयं यावत् आस्थाने नृत्यं कर्तुं न शक्नुयात् इति । अतः भवतः मनोल्लासार्थम् अहम् अन्यां व्यवस्थां चिन्तितवान् अस्मि'' इति वदन् कोणस्थं चतुरङ्गफलकम् आनीय राज्ञः पुरतः प्रसारितवान् ।

तत् दृष्ट्वा राजा - ''एतां क्रीडाम् अहं न जानामि एव खलु !'' इति निरुत्साहेन उक्तवान् ।

''क्रीडनक्रमम् अहं बोधयिष्यामि । महाराजादीनां निमित्तम् एव योग्या अस्ति एषा क्रीडा । बुद्धिशक्तेः प्रवर्धिका एषा न कठिना'' इति वदन् मन्त्री उत्साहवर्धक-शैल्या चतुरङ्गक्रीडनक्रमं बोधितवान् ।

दिनचतुष्टयाभ्यन्तरे तस्यां क्रीडायां राज्ञः आसक्तिः प्रवृद्धा । ततः सप्ताहाभ्यन्तरे राज्ञः आसक्तिः नितरां प्रवृद्धा । अतः सः मन्त्रिणम् उद्दिश्य - ''मन्त्रिवर्य ! किञ्चित्-कालं चतुरङ्गक्रीडया मनः विनोदयाम तावत्'' इति निमन्त्रणम् आरब्धवान् ।

एवम् एव मासः अतीतः । ततः कदाचित् राजा मन्त्रिणम् उद्दिश्य - ''राज्यकार्यस्य भारात् श्रान्तायाः बुद्धेः शक्तिम् उत्साहं च वर्धयितुं समर्थायाम् एतस्यां क्रीडायां सत्यां, किं नर्तक्याः उपस्थित्या ? नृत्यस्य दर्शनात् तु विनोदः प्राप्यते, न तु बुद्धिशक्तिः वर्धते । एतया क्रीडया तु उभयम् अपि साध्यते । अतः नर्तकीं यथोचितं सत्कृत्य इतः प्रेषयतु तावत्'' इति उक्तवान् । मन्त्री तथैव कृतवान् ।

एतत् ज्ञात्वा राजनर्तक्याः माता पुत्रीम् उद्दिश्य - ''पश्यतु, एतत्सर्वं भवत्याः धनदाहस्य फलम् । अत्याशा आत्म-नाशाय । इतः परं जीविकार्थं महान् प्रयत्नः करणीयः। योग्यं दण्डनं प्राप्तं भवत्या'' इति खेदेन उक्तवती ।



# हरितद्वीपाः

*रचना* - मीरानायर् ◆ *चित्रम्* - गौतमसेनः




उत्तर-अण्डमान्, मध्य-अण्डमान्, दक्षिण-अण्डमान्, लिटल्-अण्डमान् चेति चतुर्धा विभक्तः अस्ति अण्डमान्द्वीपसमूहः । उत्तर-अण्डमान्समीपे एव 'बारेन्' 'नारकोण्डम्' चेति निर्जनपर्वतौ स्तः । एतौ पर्वतौ ज्वालामुखिस्फोटनात् उद्भूतौ । 'बारेन्'पर्वतम् अण्डमान्निवासिनः 'मोलाटार्कोना' (सजीवज्वालामुखीयुक्तः) इति नाम्ना निर्दिशन्ति । समुद्रमध्यस्थः एषः ६०८ मी. औन्नत्येन विराजते । भारतस्य सजीवज्वालामुखी एषा एका एव । गतेषु २०० वर्षेषु एषा ज्वालामुखी शान्ता आसीत् । १९९१तमे वर्षे एतस्याः स्फोटः जातः । 'नारकोण्डम्'पर्वतः अपि ज्वालामुखीमयः एव । किन्तु तत्रत्या ज्वाला शान्ता अस्ति ।

अण्डमान्द्वीपानां राजधानी - 'पोर्ट्ब्लेयर्' । एषा दक्षिण-अण्डमान्प्रदेशे अस्ति । अत्र विशालं नौकास्थानकम् अस्ति । यदा नौकाः स्थानकं प्राप्नुवन्ति तदा डाल्फिन्मीनाः तान् स्वागतीकुर्वन्ति । तेषां कूर्दनं सञ्चारः च जनेषु आनन्दतरङ्गान् उत्पादयन्ति ।

आर्चिबाल्डब्लेयर्नामकः आंग्ल-सर्वेक्षकः क्रि.श. १७८९ तमे वर्षे ईस्ट्-इण्डियासंस्थायाः स्थापनार्थं योग्यं स्थलम् अन्विष्यन् एतत् स्थलं चितवान् । अतः एव एतस्य द्वीपस्य नाम 'पोर्ट्ब्लेयर्' इति जातम् अस्ति । १९४२ तमे वर्षे द्वितीयमहायुद्धावसरे जपानीयाः एतस्मिन् द्वीपे वासं कृतवन्तः आसन् । १९४३ तमे वर्षे डिसेम्बर्मासे सुभाषचन्द्रबोसः एतं द्वीपसमूहम् आगतवान् आसीत् । सः अण्डमान्द्वीपं 'हुतात्मद्वीपः' इति, निकोबार्द्वीपं 'स्वातन्त्र्यद्वीपः' इति च निर्दिष्टवान् आसीत् । स्वशासनकाले जपानीयाः अल्पेनैव कालेन समुद्रतीरे यानि सिमेण्ट्गृहाणि (बङ्कर्स्) निर्मितवन्तः आसन्

वीरसावरकरः

सेल्युलार्कारागृहम् - यत्र च सावरकरसहोदरौ अन्ये बहवः क्रान्तिकारिणः च बन्दितया वासं कृतवन्तः आसन् ।



तानि अद्यापि अत्र द्रष्टुं शक्यानि । जपानीयैः स्वदेशतः आनीतानां विविधानां फलबीजानां सन्ततिः अद्यापि अत्र अनुवर्तमाना दृश्यते । इदानीमपि जपानीभाषाभाषिणः सन्ति तत्र । स्वातन्त्र्य-प्राप्त्यनन्तरम् अस्माकं देशतः केचन पोर्ट्ब्लेयर्नगरं गत्वा वासं कृतवन्तः । तेषु बङ्गालीजनाः एव अधिकाः । तमिळुजनाः अपि तत्र वसन्ति । अत्र सामान्यजनभाषा तु हिन्दी एव ।

पोर्ट्ब्लेयरस्थं प्रसिद्धं स्थलं सेल्युलर्कारागृहम् । एतस्मिन् ६९८ लघुप्रकोष्ठाः (सेल्स्) सन्ति इत्यतः एतस्य तादृशं नाम । यद्यपि एतस्मिन् कारागारे प्रकोष्ठाः अत्यधिकाः, किन्तु तेषु एकस्मिन् अपि शयन-सौकर्यम् अपि नास्ति । एतत् कारागृहं क्रि.श. १८८६-१९०६ वर्षयोः मध्ये अपराधिनां वासार्थं ब्रिटिष्-जनाः निर्मितवन्तः । गच्छता कालेन तत् कारागृहं स्वातन्त्र्ययोधानां राजकीयजनानां च बन्धनार्थम् उपयुज्य-मानम् अभवत् । बहवः क्रान्तिकारिणः देशभक्ताः च अत्र बन्दिरूपेण वासं कृतवन्तः । तेषु केचन न प्रत्यागताः एव ।

पोर्ट्ब्लेयर्द्वीपे 'चात्तं सामिल्' अस्ति । एतत् 'एष्याखण्डे एव अतिपुरातनं काष्ठकर्तनागारम्' इति प्रसिद्धम् अस्ति । एतस्य प्रदर्शनागारे (षो-रूम्) विविधाः अमूल्याः काष्ठप्रकाराः द्रष्टुं शक्याः ।

'रास्पोर्ट्', यच्च ब्रिटिष्जनानां शासनकेन्द्रम् आसीत् तत्, पोर्ट्ब्लेयर्तः अनतिदूरे अस्ति । अत्र कदाचित् जातात् भूकम्पात् भीताः जनाः तं द्वीपं त्यक्त्वा अन्यत्र गतवन्तः । पोर्ट्ब्लेयर्तः २६ कि.मी.दूरे 'चिडियाटापू' (पक्षिद्वीपः) अस्ति । बहुविधानां पक्षिणां वासस्थानम् अस्ति एषः द्वीपः । अतः एव एषः प्रवासिनाम् आकर्षणकेन्द्रम् अपि अस्ति । अस्मिन् द्वीपे 'स्टिफ्लेट्'नीडाः बहवः सन्ति । तान् नीडान् सङ्ग्रहीतुं बर्माप्रभृतिभ्यः देशेभ्यः अपि जनाः आगच्छन्ति । ते नीडैः सह तत्रत्यान् जनान् अपि नीत्वा दासरूपेण तेषां विक्रयणं कुर्वन्ति स्म । अतः एव अत्रत्याः मूलवासिनः इदानीम् अपि नूतनान् दृष्ट्वा भीताः भवन्ति, तान् बहुधा पीडयन्ति अपि ।

ओञ्जेस्परिवारः कश्चन





निकोबारीयकुटीरम्



नृत्यनिरताः निकोबार्वासिनः

बाह्यसम्पर्कम् अनिच्छन्तु जारवालुजातीयाः सेण्टनिलीस्जातीयाः च प्रमुखाः सन्ति । जारवालुजनाः प्रायः दक्षिण-मध्य-अण्डमान्प्रदेशे निवसन्ति । ते सामान्यतः २०० जनाः सन्ति । ते शिलयुगस्य जनाः इव इदानीमपि मृगयया एव जीवन्ति ।

सेण्टनिलीस्जनाः उत्तरसेण्टनल्द्वीपे वसन्ति । नूतनाय कस्मैचिदपि प्रवेशं न यच्छन्ति ते । इदानीमपि मानवसमाजतः दूरे पृथक्तया एव निवसन्ति ते । अतः एव अतिविरलजातीयत्वेन परिगण्यन्ते एते ।

लिटल्-अण्डमान्प्रदेशे दुगाङ्जलधारा-समीपे 'ओञ्जेस्'जातीयाः जनाः निवसन्ति, येषां च कुलं दिने दिने क्षीयते । एतज्जातीयाः पुरुषाः महिलाः चापि शिरसः मुण्डनं कृत्वा मुखं शरीरं च आर्द्र-मृत्तिकया अलङ्कुर्वन्ति । वृश्चिकस्य नलिकासदृशे अङ्गे तमाखुं पूरयित्वा धूमपानं कुर्वन्तः महान्तं सन्तोषम् अनुभवन्ति एते ।

इदानीम् अण्डमान्मूलनिवासिनः बहवः सञ्चारिजीवनं त्यक्त्वा कृषिकार्यं कुर्वन्तः सन्ति ।

जारवालु, सेण्टनिलीस्, ओञ्जेस्, अण्डमान् इत्येताः चतस्रः जातयः अत्र सन्ति, याश्च निग्रोमूलाः । 'टेन् डिग्री चानेल्'नामिका महा प्रवाहकुल्या अण्डमान्-निकोबार्द्वीपयोः विभागं करोति । अण्डमान्-निकोबार्द्वीपयोः मध्ये केवलं १९५ कि.मी. अन्तरमस्ति । परन्तु एतयोर्मध्ये



स्वकार्यनिरतः कश्चन द्वीपवासी



षाम्पेन्सुकुलीया माता अपत्यसहिता

सांस्कृतिकसाम्यं तु किञ्चिदपि न दृश्यते। निकोबारुद्वीपसमूहे आहत्य १९ द्वीपाः सन्ति। परन्तु केवलेषु १२ द्वीपेषु जनाः निवसन्ति। निकोबार्-द्वीपेषु विशालतमः द्वीपः अस्ति 'ग्रेट्निकोबार्'। अधिकाभिवृद्धिं गतः द्वीपः तावत् 'नान्कारी'-नामकः। अधिकजनसंख्यायुक्तः द्वीपः अस्ति 'कार्निकोबार्'नामकः। लघुपर्वतबहुलेषु निकोबार्द्वीपेषु 'मङ्गोलायिड्'वंशीयाः, 'निकोलूरी-षाम्पेन्स्'वंशीयाः च प्राधान्येन निवसन्ति। पर्वतस्य उपरि स्तम्भारोपणं कृत्वा, स्तम्भस्य उपरि गोपुरसदृशकुटीरनिर्माणं कृत्वा, तस्मिन् वासं कुर्वन्ति ते। निश्रेणीसाहाय्येन कुटीरं प्रति गमनागमनं कुर्वन्ति ते। दक्षिणभागे विद्यमाने ग्रेट्निकोबार्घोरारण्ये 'षाम्पेन्स्'जनाः वसन्ति। एते मधुप्रियाः। कष्टेन विना मधुसङ्ग्रहणे एते नितरां निपुणाः सन्ति। जाति-विशेषीयाणां सस्यानां पर्णानि मुखे स्थापयित्वा चूर्णं कृत्वा तेषां रसेन मुखं, हस्तौ च लेपयित्वा मधुमक्षिकानीडसमीपं गच्छन्ति ते। तदा मधुमक्षिकाः तान् न स्पृशन्ति अपि।

ग्रेट्निकोबार्पश्चिमतीरे 'मेगपाड्'नामकः लघुद्वीपः अस्ति। मेगपाड्पक्षिणः अत्र अधिकाः सन्ति इति कारणतः अस्य एतत् नामधेयम् अस्ति।

निकोबार्द्वीपसमूहस्य दक्षिणान्तभूभागः 'पिग्मालियन् पायिण्ट्' इति पूर्वं निर्दिश्यते स्म। सः इदानीं तु 'इन्दिरा पायिण्ट्'नाम्ना निर्दिश्यते।

इण्डोनेषियायाः सुमात्राद्वीपः इतः १५० कि.मी. दूरे अस्ति। एषः न केवलं अण्डमान्-निकोबार्द्वीपसमूहस्य अन्तिमः भागः, अपि तु भारतस्य दक्षिणभागस्य अन्तिमभागः अपि अस्ति। एतावता अस्माकं समुद्रतीरप्रयाणं समाप्तिम् एति।

मेगपाड्पक्षी



आकर्षिकायाः ज्ञान-वर्धिकायाश्च यात्रायाः निमित्तं सन्नद्धाः भवन्तु भवन्तः। एषा यात्रा प्रारप्स्यते दक्षिणभारते प्रवहन्त्याः कावेरीनद्याः तीरतः। अग्रिमसञ्चिकायां *'भारतीयाः नद्यः'* इति शीर्षकेण युक्ता *'कावेरीयात्रा'* प्रकाशयिष्यते।



# महादेवस्य विस्मरणशीलता

तलपुरग्रामस्थस्य जगन्नाथस्य चत्वारः पुत्राः आसन् । तेषु महादेवः कनिष्ठः । ज्येष्ठाः त्रयः अपि महता कष्टेन विद्याभ्यासं कृत्वा जीवननिर्वहणं कुर्वन्ति स्म । महादेवः विद्याभ्यासार्थं बहु प्रयत्नं कृतवान् । परन्तु सः स्वकीये प्रयत्ने विफलः जातः । तस्य कारणं महादेवस्य महती विस्मरणशीलता ।

क्रीडामग्नः सः कदाचित् भोजनं कर्तुम् अपि विस्मरति स्म । भोजनं कृत्वा भोजनं कृतं वा न वा इति न स्मरति स्म । अज्ञात्वा माता भोजनार्थम् आह्वयति चेत् पुनः आगत्य सः भोजनं करोति स्म । वस्तूनि आनेतुम् आपणं गतः सः आनेतव्यं विस्मृत्य अन्यदेव किञ्चित् आनयति स्म ।

महादेवस्य विस्मरणशीलत्वं मातापित्रोः चिन्तायाः कारणम् अभवत् । यद्यपि मातापितृभ्यां महान् प्रयत्नः कृतः, तथापि महादेवस्य स्मरणशक्तिः न प्रवृद्धा ।

महादेवस्य अष्टादश वर्षाणि अभवन् । किन्तु सः विस्मरणशीलताविषये यथापूर्वम् एव आसीत् । अतः तस्य एतादृशीं स्थितिं दृष्ट्वा मातापितरौ बहु दुःखितौ । महादेवस्य अग्रजाः एतद् ज्ञात्वा मातापितरौ उद्दिश्य – ''वयं तु सुखेन स्मः । अस्मदीयं विंशति-एकर्परिमितं क्षेत्रं महादेवाय दद्मः । तस्मात् क्षेत्रात् किञ्चिदपि भागं वयं न इच्छामः । भवन्तौ चिन्तां न कुरुताम्'' इति सान्त्वनवचनानि उक्तवन्तः ।

एतत् श्रुत्वा मातापितरौ पुत्रान् उद्दिश्य – ''विस्मरणशीलम् एतं जनाः सुलभतया वञ्चयितुं शक्नुवन्ति । यावत् आवां भवावः तावत् तु चिन्ता नास्ति । भवन्तः कियत्कालम् एतस्य योगक्षेमं द्रष्टुं शक्नुवन्ति ? प्रौढः पुत्रः स्वस्य योगक्षेम-विषये स्वयमेव चिन्तयेत्'' इति दुःखेन उक्तवन्तौ ।

'भामहः'



कदाचित् तलपुरग्रामं प्रति कश्चित् यतिः आगतवान् । 'सर्वविधाः समस्याः अपि यतिः परिहर्तुं शक्नोति' इति जनाः वदन्तः आसन् । तद् श्रुत्वा महादेवस्य मातापितरौ यतिना मिलित्वा महादेवस्य विषयं निवेदितवन्तौ ।

तदा यतिः उक्तवान् - ''तम् अत्र आनयन्तु । तस्य विस्मरणशीलत्वं निवारयितुम् उपायः अस्ति वा न वा इति परिशील्य वदिष्यामि'' इति ।

अनन्तरदिने महादेवः मातापितृभ्यां सह यतेः समीपं गतवान् । यतिः महादेवं पुष्पवृक्षस्य समीपं नीतवान् । तस्मिन् वृक्षे पीततवर्णीयानि पुष्पाणि आसन् । वृक्षस्य शाखायां सर्वत्र कण्टकानि आसन् ।

यतिः महादेवम् उद्दिश्य - ''भोः, भवान् वृक्षम् आरुह्य द्वादश एव पुष्पाणि निष्कासयतु । कण्टकानि यथा न पीडयेयुः तथा जागरूकः भवतु । अनन्तरं भवतः विस्मरणशीलत्वं निवारयितुम् उत्तमम् औषधं सूचयिष्यामि'' इति उक्तवान् ।

महादेवः अष्टौ एव पुष्पाणि निष्कास्य यतये दत्तवान् । महादेवः स्वेन कति पुष्पाणि निष्कासनीयानि आसन् इति एव विस्मृतवान् आसीत् । पुष्पाणि अजागरूकतया निष्कासितानि इति कारणात् तस्य अङ्गुलीषु व्रणः जातः आसीत् । ततः रक्तम् अपि निस्सरति स्म ।

यतिः एतत् सर्वं दृष्ट्वा - ''हा हन्त ! कण्टकैः व्रणः अभवत् वा ? मया उक्ताः सूचनाः भवता न अनुसृताः । अतः भवतः महत् कष्टम् आपतितम् अस्ति । एतस्य वृक्षस्य कण्टके विषम् अस्ति । तद् विषं विलम्बेन प्रभावं जनयिष्यति । उत्तमा चिकित्सा न कार्यते चेत् वर्षाभ्यन्तरे लघुरोगस्य कारणात् अपि भवतः प्राणाः निर्गमिष्यन्ति'' इति उक्तवान् ।

तदा महादेवः महतीं चिन्तां प्राप्नुवन् - ''एषः विषयः आरम्भे एव सूचनीयः आसीत् भवता । तदा अहं जागरूकतया कार्यम् अकरिष्यम् । अहं विस्मरणशीलः इति ज्ञात्वाऽपि भवान् किमर्थं मां तत् कार्यम् उक्तवान् ?'' इति पृष्टवान् ।

तत् श्रुत्वा यतिः मृदु हसन् - ''तत् सर्वम् इदानीं न आवश्यकम् । अहम् इदानीं भवते दश गुलिकाः ददामि, प्रतिदिनं द्विवारं भोजनानन्तरम् एकैकां गुलिकां स्वीकरोतु । अधुना अष्टौ पुष्पाणि

निष्कासितवान् खलु ! तानि सायं शिव-देवालयाय ददातु । एवम् एव पञ्च दिनानि प्रतिदिनम् अपि अष्टौ पुष्पाणि देवालयाय ददत् भवतु । इतः परं यदा कदापि हस्ते कण्टकं लग्नं यथा न भवेत् तथा जागरूकः भवतु'' इति अवदत् ।

''स्वामिन् ! अहं विस्मरणशीलः अस्मि । अतः एतद् सर्वं मम मात्रे निवेदयतु, सा तद्विषये चिन्तयिष्यति'' इति उक्तवान् महादेवः ।

यतिः – 'तथा कर्तुं न शक्यते' इति वदन् इव शिरः चालयित्वा - ''एतं विषयं मां, भवन्तं च विहाय तृतीयः जानाति चेत् औषधं फलं न ददाति । अतः सर्वं भवता एव करणीयम् । भवता किं करणीयमिति पुनः अपि वदामि, शृणोतु तावत् । अनन्तरं पुनः किं करणीयमिति न प्रष्टव्यम्'' इति उक्तवान् ।

महादेवः एतत् अङ्गीकृतवान् । अनन्तरं यतिः तेन किं किं करणीयम् इति विस्तरेण पुनः बोधितवान् । ततः तं मातापितृभ्यां समर्पितवान् । अनन्तरं ते गतवन्तः ।

ततः पञ्चदिनानाम् अनन्तरं महादेवः मातापितृभ्यां सह यतेः समीपम् आगत्य - ''स्वामिन् ! यथा भवता उक्तं तथा एव सर्वम् अनुष्ठितम् । इतोऽपि किं करणीयमिति सूचयित्वा मम भीतिं निवारयतु'' इति उक्तवान् ।

''इतः परं सर्वे जानन्ति चेत् चिन्ता नास्ति । भवान् किं कृतवान् इति सर्वं वदतु'' इति कथितवान् यतिः ।

''अहं प्रतिदिनं द्विवारं भोजनानन्तरं



गुलिकाः स्वीकृतवान् । एवं पञ्च दिनानि निरन्तरं कृतवान् । प्रतिदिनम् अष्ट पुष्पाणि उत्पाट्य सायं देवालये दत्तवान् । एकदापि कण्टकैः पीडितः न अभवम्'' इति उक्तवान् महादेवः ।

''अहं सन्तुष्टः । पञ्चदिनेभ्यः पूर्वं केवलं द्विवारं उक्ताः सूचनाः स्मरणे स्थापयित्वा पालितवान् अस्ति एषः । अतः एतस्य स्मरणशक्तिः प्रवृद्धा इत्येव खलु सिद्ध्यति'' इति सन्तोषेण उक्तवान् यतिः ।

महादेवस्य मातापितरौ आश्चर्येण - ''भवता उक्तं सत्यमेव । भवता कीदृश्यः गुलिकाः दत्ताः इति वयं न जानीमः । एताः गुलिकाः अपूर्वाः एव । एतस्य मस्तिष्कस्य उपरि तेन महान् प्रभावः जातः अस्ति'' इति उक्तवन्तौ ।

तदा यतिः हसन् - ''महादेवस्य स्मरणशक्तिवर्धने मम गुलिकाभिः कोऽपि प्रभावः न कृतः । वस्तुतः भवतोः एव दोषः अस्ति अत्र । अतः एव महादेवः तथा वर्धितः आसीत्'' इति महादेवस्य मातापितरौ अवदत् यतिः ।

अनन्तरं वस्तुस्थितिं विवृण्वन् सः - ''सर्वेषु भगवता दत्ता बुद्धिः समानरीत्या भवति एव । केचन आलस्येन तस्याः उपयोगं अकुर्वन्तः सर्वदा अन्यान् एव अवलम्बन्ते । आलस्येन कीदृशी हानिः भवति इति ते लघुवयसि न अवगच्छन्ति । अतः एव उपेक्षया व्यवहरन्ति । गच्छता कालेन तदर्थं पश्चात्तापम् अनुभवन्ति । महादेवस्य स्थितिः अपि एषा एव । वस्तुतः महादेवः अपि बुद्धिमान् एव, परन्तु अलसः । अतः एव तस्य विस्मरणशीलता प्रवृद्धा । अद्यपर्यन्तं स्वस्य विस्मरणशीलताकारणेन तेन महान् क्लेशः कोऽपि न अनुभूतः । परन्तु अधुना स्वकीयं विस्मरणशीलत्वं स्वीयान् प्राणान् एव अपरहति इति यदा सः ज्ञातवान्, तदा स्वस्य स्मरणशक्तेः उपयोगं कृतवान् सः । महादेवस्य स्मरणशक्तिदोषः अस्ति उत उपेक्षालस्यादयः सन्ति इति निश्चेतुम् एव अहं पञ्च दिनानि तस्मिन् मरणभीतिम् उत्पादितवान् । इदानीं तु सिद्धं यत् तस्य विस्मरणशीलता नास्ति इति । अतः तदीयम् एकर्त्रयपरिमितं क्षेत्रं अपि तस्य भ्रातृभ्यः एव दत्त्वा, तेषां कृपाश्रये एषः जीवननिर्वहणं यथा कुर्यात् तथा व्यवस्थां कुर्वन्तु । सर्वं क्षेत्रं महादेवाय दातव्यमिति योजना सर्वथा अनुचिता । तां योजनां त्यजन्तु भवन्तः'' इति उक्तवान् ।

एतद् श्रुत्वा महादेवः प्रयत्नेन स्मरन् - ''मम अंशः पञ्च-एकर्परिमितः, न तु एकरत्रयमितः'' इति उक्तवान् ।

एतद् श्रुत्वा यतिः सन्तोषेण करताडनं कुर्वन् मातापितरौ उद्दिश्य - ''क्षेत्रं कियद् अस्ति, स्वकीयः अंशः कियद् इत्यादिकम् अपि सम्यक् स्मरति महादेवः । एतस्मात् अपि दृढीकृतम् अभवत् खलु - एतस्य विस्मरणशीलता नास्ति इति ?'' इति उक्तवान् ।

अग्रे कदापि विस्मरणं महादेवं न अपीडयत् ।



आंग्लान् सम्मुखीकृतवन्तः धीराः – ५

# पळश्शीराजः केरलवर्मा

रचना – मीरा उग्रा ❖ चित्रम् – गौतमसेनः

'केरलवर्मा' इति नाम्ना प्रसिद्धः पळश्शीराजः कोट्टायंसंस्थानाधिपतीनां वंशे जातः । क्रि.श. १७९९तमे वर्षे काचित् विषादकारी वार्ता आगता राजधानीं पळश्शीं प्रति ।













क्रि.श. १८०२ तमे वर्षे अक्टोबरमासे एडचेनकुञ्ञान्
नायरवर्यस्य नेतृत्वे पनमरदुर्गम् आक्रान्तवन्तः जनाः ।


अनन्तरं नायरवर्यः पुलपाळदेवालयं प्रति
गत्वा प्रजान् इत्थं प्रबोधितवान् -
भोः, आगच्छन्तु, सङ्घटिताः भवन्तु । कुतश्चित् आगत्य अत्र शासनं कुर्वतः एतान् प्रतिप्रेषयन्तु ।


तस्य आह्वानं मानयित्वा त्रिसहस्राधिकजनाः आगताः । अनन्तरम्
एडचेन्नकुञ्ञान् नायरवर्यः मैसूरुमानन्दवाडिनगरयोः मार्गम् अपि
स्वायत्तीकृतवान् । एतेन आङ्ग्लानां चिन्ता आरब्धा ।
अस्माकं वस्तूनि सैनिकाः ते आनेतुं न शक्नुवन्ति


एवम् ! दूरतः आगच्छतः सैन्यस्य निरोधं ते कुर्वन्ति ? तर्हि स्थानीयः सैनिकगणः अस्माभिः सज्जीकरणीयः ।

कर्नल् मेक्लूड्वर्यस्य नायकत्वे कोल्कार्सनामकः नूतनः सैनिकगणः उत्तमं शिक्षणं प्राप्तवान् । पळश्शीराजेन अनेकेषु युद्धेषु पराजयः प्राप्तव्यः अभवत् । तस्य दलपतयः धैर्येण युद्धं कृत्वा वीरमरणं प्राप्तवन्तः । अन्ते ३०.११.१८०५ दिनाङ्के थामसहर्विबेबर, क्याप्टन् क्लाफम् च पळश्शीराजस्य शोधनकार्ये निरतौ अभवताम् ।

















# महाभारतम्

कृष्णः द्वारकां प्रति गतवान् । अनन्तरम् उपप्लव्ये धर्मराजः, विराटः इत्यादयः राजानः युद्धस्य सिद्धताम् आरब्धवन्तः । 'मन्त्रिभिः बन्धुभिः मित्रैः च सह अनुक्षणं प्रस्थाय आगन्तव्यम्' इति सर्वेभ्यः राजभ्यः विराटः द्रुपदः च मिलित्वा वार्तां प्रेषितवन्तः । तां वार्तां ज्ञातवन्तः राजानः पाण्डवविषयकप्रीतेः कारणेन, विराट-द्रुपदयोः विषये आदरः आसीत् इति कारणेन वा उपप्लव्यं प्रति आगमनम् आरब्धवन्तः ।

पाण्डवानां पक्षे युद्धसन्नाहः वेगेन प्रचलन् अस्ति इति ज्ञातवन्तः कौरवाः अपि स्वस्य मित्रेभ्यः आह्वानं प्रेषितवन्तः । एवं भाविनः कौरवपाण्डवयोः युद्धस्य निमित्तं सर्वत्र कार्यम् आरब्धम् । महतः सैन्यस्य चलनेन समग्रे भूमण्डले एव कम्पनम् आरब्धम् ।

तन्मध्ये द्रुपदः स्वस्य पुरोहितं कौरवाणां समीपं प्रेषयितुम् इच्छन् तम् उक्तवान् - ''श्रीमन् ! भवान् विवेकी । धृतराष्ट्रः कीदृशः, धर्मराजः च कीदृशः इति भवान् सम्यक् जानाति एव । कौरवाः केन प्रकारेण पाण्डवान् वञ्चितवन्तः इति धृतराष्ट्रः अपि जानाति । विदुरेण निवारिते सत्यपि पुत्रस्य इच्छां पुरस्कुर्वन् धृतराष्ट्रः द्यूतार्थं धर्मराजम् आहूतवान् । तादृशाः कौरवाः 'पाण्डवेभ्यः राज्यं न दातव्यम्' इति अधुना निश्चितवन्तः सन्ति । भवान् गत्वा धृतराष्ट्रं धर्मं बोधयतु । तस्मिन् कार्ये विदुरः भवतः साहाय्यं करिष्यति । यदि भवान् सभायां दुर्योधनस्य दुर्गुणान्, पाण्डवानां सद्गुणान् च वदेत् तर्हि तेषां पक्षे विद्यमानाः केचन वा अधर्मार्थं युद्धकरणं तिरस्कुर्युः । तेषु भेदजननम् एव भवतः प्रथमं कार्यम् । दुर्योधनादिभ्यः भवतः



किञ्चिदपि भयं मास्तु । यतः भवान् न केवलं दूतः, अपि तु ज्येष्ठः अस्ति अपि '' इति ।

ततः द्रुपदस्य पुरोहितः स्वस्य शिष्यगणेन सह हस्तिनापुरं प्रति प्रस्थितवान् ।

अनन्तरं पाण्डवाः अपि सर्वेषां राज्ञां समीपं दूतान् प्रेषितवन्तः । किन्तु कृष्णं द्रष्टुं स्वयम् अर्जुनः एव प्रस्थितवान् । गूढचराणां द्वारा पाण्डवानां कार्ययोजनां सर्वां ज्ञात्वा दुर्योधनः अल्पेन परिवारेण सह स्वयं द्वारकां प्रति प्रस्थितवान् । अर्जुनः दुर्योधनश्च एकस्मिन् एव दिने द्वारकां प्राप्तवन्तौ ।

उभौ अपि यदा कृष्णस्य गृहं प्राप्तवन्तौ तदा कृष्णः निद्रामग्नः आसीत् । कृष्णस्य शिरसः दिशि एकम् आसनम् आसीत् । प्रथमं गतः दुर्योधनः साक्षात् गत्वा तस्मिन् आसने उपविष्टवान् । अनन्तरं गतः अर्जुनः कृष्णस्य पादयोः समीपे हस्तौ बद्ध्वा स्थितवान् ।

किञ्चित्कालानन्तरं जागरितः कृष्णः उत्थाय प्रथमं पादयोः समीपे स्थितवन्तम् अर्जुनं दृष्टवान् । अनन्तरं शिरसः समीपे उपविष्टवन्तं दुर्योधनं दृष्टवान् । कृष्णः उभयोः अपि कुशलं विचार्य आतिथ्यम् अपि कृत्वा तयोः आगमनकारणं पृष्टवान् ।

तदा दुर्योधनः मन्दहासेन सह उक्तवान् - ''कृष्ण ! भाविनि युद्धे भवता अस्माकं साहाय्यं करणीयम् । भवतः दृष्ट्या अहम् अर्जुनः च समानौ । यतः अस्माकं बन्धुता समाना एव । अहं भवन्तं द्रष्टुं प्रथमम् आगतः अस्मि । अतः मम साहाय्यकरणम् एव न्याय्यम्'' इति ।

तदा कृष्णः - ''भोः दुर्योधन ! भवान् प्रथमः स्यात् नाम । परन्तु अहं प्रथमम् अर्जुनं दृष्टवान् अस्मि । अतः अहम् उभयोः अपि साहाय्यं करिष्यामि । कनिष्ठाय अर्जुनाय प्रष्टुं प्रथमः अवकाशः दीयते मया । मम समीपे मादृशाः दशसहस्रं योद्धारः सन्ति । मम स्वीकरणस्य अङ्गीकारः उचितः, उत सैन्यस्य स्वीकरणस्य अङ्गीकारः इति निर्णयतु अर्जुनः । अहं तु युद्धं न करिष्यामि । मार्गदर्शनमात्रं करिष्यामि । अर्जुन ! भवान् अनयोः कतरत् इच्छति ?'' इति पृष्टवान् ।

अर्जुनः कृष्णस्य उपस्थितिम् एव अङ्गीकृतवान् । दशसहस्रं गोपयोद्धॄन्

दुर्योधनः सन्तोषेण अङ्गीकृतवान् । ततः सः बलरामस्य समीपं गत्वा - ''युद्धे साहाय्यं करोतु'' इति प्रार्थितवान् ।

तदा बलरामः - ''भोः दुर्योधन ! यदा अहम् अभिमन्योः विवाहार्थं विराटनगरीं गतवान् आसं, तदा एव उभयोः अपि विषये समभावं प्रकटितवान् आसम् । किन्तु तत् कृष्णस्य सम्मतं न आसीत् । तदा एव अहं निर्णीतवान् यत् अहं कस्यापि साहाय्यं न करिष्यामि इति । अपि च भवादृशाय महावीराय अन्यस्य साहाय्यम् आवश्यकं किम् ? गच्छतु । क्षत्रिय-धर्मानुगुणं युद्धं करोतु'' इति उक्तवान् ।



दुर्योधनः महता आनन्देन बलरामम् आलिङ्ग्य 'जयः लब्धः एव' इति भावितवान् । ततः सः कृतवर्मणः समीपं गत्वा तम् अपि साहाय्यं प्रार्थितवान् । कृतवर्मा दुर्योधनाय एकाक्षोहिणीसेनां दत्तवान् । एवं दुर्योधनः स्वस्य आगमनस्य कार्यं साधयित्वा महता सन्तोषेण हस्तिनापुरं प्रति गतवान् ।

दुर्योधनस्य गमनस्य अनन्तरं कृष्णः अर्जुनम् उद्दिश्य - ''भोः अर्जुन ! अहं युद्धं न करोमि इति उक्तवान् अस्मि । तथापि भवान् किमर्थं महतीं सेनां परित्यज्य माम् एव चितवान् ?'' इति पृष्टवान् ।

तदा अर्जुनः - ''तां समग्रां सेनां भवान् एकः एव जेतुं शक्नोति । तथैव सर्वान् शत्रून् अहम् एकः एव जेतुं शक्नोमि । यदि भवान् युद्धं कुर्यात् तर्हि जयस्य कीर्तिः सर्वा भवदीया एव भविष्यति । मदर्थं किमपि न अवशिष्यते । ममापि कीर्तेः आकाङ्क्षा अस्ति । अतः एव अहं भवन्तं चितवान् अस्मि । किन्तु भवता मम किञ्चित् साहाय्यं करणीयम् । भवान् यदि मम सारथिः भवेत् तर्हि अहं न केवलं कौरवसेनाम्, अपि तु त्रीन् लोकान् अपि जेतुं शक्नुयाम् । अतः कृपया भवान् मम एताम् एकाम् इच्छां पूरयतु'' इति प्रार्थितवान् ।

''निश्चयेन भवतः इच्छां पूरयिष्यामि'' इति कृष्णः अर्जुनाय वचनं दत्त्वा तं ततः प्रेषितवान् ।

मद्रदेशस्य महाराजः नकुलसहदेवयोः मातुलः शल्यः पाण्डवैः प्रेषितस्य दूतस्य द्वारा निमन्त्रणं प्राप्तवान् । सः पाण्डवानां साहाय्यं कर्तुम् एकाक्षोहिणीमितां सेनां स्वीकृत्य महारथिभिः स्वपुत्रैः सह प्रस्थितवान् । सेनया सह तत्र तत्र वासं



कुर्वन् सः पाण्डवानां स्थानं प्रति आगच्छन् आसीत् ।

'शल्यः पाण्डवानां साहाय्यं कर्तुम् आगच्छन् अस्ति' इति वार्ता चाराणां द्वारा ज्ञात्वा दुर्योधनः, यत्र यत्र शल्यः वासं कृतवान् तत्र सर्वत्र उत्तमाः वासव्यवस्थाः कारितवान् स्वस्य जनानां द्वारा । तेषाम् आगमनात् पूर्वमेव तात्कालिकवसतिगृहाणि निर्माय तानि अलङ्कृत्य तेषां स्वागतस्य व्यवस्थां करोति स्म सः । समीचीनां भोजनव्यवस्थां च कारयित्वा मनोरञ्जनार्थम् अपि व्यवस्थां कारयति स्म । अतः शल्यस्य प्रयाणम् अत्यन्तं सुखकरम् आसीत् । एताः सर्वाः व्यवस्थाः धर्मराजेन कारिताः इति मत्वा कदाचित् शल्यः - ''यः एतादृशीं सुव्यवस्थां कृतवान् अस्ति तम् अत्र आनयन्तु । सः यद् पृच्छति तद् अहं दास्यामि'' इति उक्तवान् ।

तदा रहस्यरूपेण तेन सह एव स्थितः दुर्योधनः अग्रे आगतवान् । शल्यः योग्यरीत्या तस्य सत्कारं कृत्वा - ''भवान् यद् इच्छति तद् पृच्छतु । निश्चयेन ददामि'' इति उक्तवान् ।

अनुक्षणं दुर्योधनः - ''हे राजन् ! भवान् मम सैन्यस्य अधिपतिः भवतु'' इति उक्तवान् ।

तदा शल्यः तस्य इच्छाम् अङ्गीकृत्य - ''दुर्योधन ! भवान् अधुना स्वनगरं प्रतिगच्छतु । मया धर्मराजेन सह किञ्चित् वार्तालापः करणीयः अस्ति । तेन सह सम्भाषणं कृत्वा अहं भवतः समीपम् आगमिष्यामि'' इति उक्तवान् ।

''धर्मराजेन मिलित्वा शीघ्रमेव प्रत्यागच्छतु । अस्माकं जयः भवदधीनः अस्ति'' इति उक्त्वा दुर्योधनः शल्यम् आलिङ्ग्य हस्तिनापुरं प्रति प्रस्थितवान् ।

अनन्तरं शल्यः उपप्लव्ये विद्यमानं पाण्डवानां शिबिरं गत्वा तत्र धर्मराजस्य आतिथ्यं प्राप्य नकुलसहदेवौ प्रीत्या आलिङ्ग्य स्वसमीपे उपवेश्य धर्मराजेन सह सम्भाषणं कुर्वन् - ''भोः धर्मराज ! कुशलं खलु ? भगवतः अनुग्रहेण भवान् सकुशलं अरण्यवासम् अज्ञातवासं च समापितवान् अस्ति । राज्यात् निर्वासितैः कष्टेन विना किं वा अन्यत् अनुभूयते ? अतः अधुना कौरवान् युद्धे जित्वा सुखं प्राप्नोतु । एतावत् कष्टम् अनुभूतं चेदपि भवान् अनुजैः सह सन्तोषेण एव अस्ति इति एतत् दृष्ट्वा अहम्

सन्तुष्टः अस्मि। ततोऽपि अधिकं किमपि न अपेक्षे अहम्'' इति उक्तवान् ।

अनन्तरं मार्गे दुर्योधनेन कृतस्य अतिथिसत्कारस्य वार्तां निवेद्य अनन्यगत्या कथं तस्मै वचनं दातव्यम् अभवत् इति धर्मराजं निवेदितवान् शल्यः ।

सर्वं श्रुत्वा धर्मराजः शल्यम् उक्तवान् - ''भोः राजन् ! भवान् योग्यं कार्यमेव कृतवान् अस्ति । आत्मनः तोषकाणां प्रतितोषणं ज्येष्ठानां कर्तव्यम् एव । तेन सह भवता अस्माकं साहाय्यं अपि किञ्चित् करणीयम् । भवान् युद्धे कृष्णस्य समानः अस्ति । यदा कर्णार्जुनयोः युद्धं भविष्यति तदा भवता एव कर्णस्य सारथ्यं करणीयं भविष्यति इत्यत्र सन्देहः एव नास्ति । यतः अर्जुनस्य सारथेः कृष्णस्य समबलः कौरवाणां सेनायाम् अन्यः नास्ति । तथा कर्णस्य सारथ्यसमये अर्जुनस्य रक्षणं भवतः दायित्वम् । कर्णस्य उत्साहभङ्गः यथा स्यात् तथा भवता करणीयम् । एषा एव मम प्रार्थना'' इति ।

तस्य उत्तररूपेण शल्यः उक्तवान् - ''भोः धर्मज ! अवकाशे लब्धे निश्चयेन दुराचारिणः कर्णस्य उत्साहभङ्गं करिष्यामि एव । अर्जुनः यथा जयं प्राप्नुयात् तथा करणं मम दायित्वम्'' इति ।

अनन्तरं धर्मराजेन वनवासे अज्ञातवासे च अनुभूतं कष्टं सर्वं श्रुत्वा शल्यः, देवेन्द्रः केन प्रकारेण कष्टानि अनुभूतवान् इति विषये कथाम् उक्तवान् -

''त्वष्टृप्रजापतिः इन्द्रं जेतुम् इच्छन् विश्वरूपनामकं पुत्रं सृष्टवान् । विश्वरूपस्य त्रीणि शिरांसि आसन् । तादृशः त्रिशिरस्कः विश्वरूपः इन्द्रपदवीं प्राप्तुं तपः आरब्धवान् । सः तपसि यशस्वी भवेत् इति भीतः इन्द्रः तस्य तपोभङ्गं कर्तुम् अप्सरसः



प्रेषितवान् । किन्तु ताः विश्वरूपस्य मनः विचालयितुं न शक्ताः ।

तदा इन्द्रः स्वयं गत्वा विश्वरूपं वज्रायुधेन प्रहृत्य मारितवान् । तेन तात्कालिकरूपेण इन्द्रस्य भयं दूरं गतम् । किन्तु शीघ्रमेव ततोऽपि महती आपत् आपतिता ।

इन्द्रः स्वपुत्रं विश्वरूपं मारितवान् इति ज्ञात्वा कुपितः त्वष्टा इन्द्रस्य मारणार्थं वृत्रं सृष्टवान् ।

पितुः आज्ञां पालयन् प्रलयकालस्य रुद्रः इव व्यवहरन् वृत्रः स्वर्गं गत्वा युद्धार्थम् इन्द्रम् आहूतवान् । इन्द्रस्य शस्त्रास्त्राणां प्रहारम् अपरिगणयन् वृत्रः इन्द्रं गृहीत्वा निगीर्णवान् एव । अनन्तरं वृत्रः अजानन् यदा जृम्भणं कृतवान् तदा इन्द्रः तस्य मुखतः बहिः आगत्य तेन सह युद्धं कर्तुम् अशक्नुवन् युद्धं परित्यज्य पलायनं कृतवान् ।

पश्चात् इन्द्रः अन्याभिः देवताभिः सह विष्णोः समीपं गत्वा स्वकष्टानि निवेद्य - ''वृत्रस्य हननार्थम् उपायं सूचयतु'' इति प्रार्थितवान् ।

''वृत्रः इदानीमेव मरणं न प्राप्नोति । अतः अधुना तस्य मैत्रीसम्पादनम् एव वरम्'' इति विष्णुः इन्द्रं सूचितवान् । तदा इन्द्रः ऋषिभिः सह वृत्रस्य समीपं गतवान् । ऋषयः वृत्रम् उक्तवन्तः - ''भवान् इन्द्रं जेतुं न शक्नोति । इन्द्रः अपि भवन्तं जेतुं न शक्नोति । अतः उभौ अपि सन्धानं कृत्वा सन्तोषेण जीवताम्'' इति ।

तेषां वचनं अङ्गीकुर्वन् वृत्रः सन्धिं कृत्वा इन्द्रेण सह प्रीत्या, आदरेण च व्यवहारं कृतवान् । किन्तु इन्द्रः वृत्रस्य मारणाय समयं प्रतीक्षमाणः कदाचित् समुद्रतीरे विहरन्तम् एकाकिनं वृत्रं वज्रायुधेन प्रहृत्य मारितवान् ।

वृत्र-विश्वरूपयोः मारणात् प्राप्तेन पापेन इन्द्रः मतिभ्रान्तः सन् यत्र कुत्रापि अटनम् आरब्धवान् । इन्द्रः कुत्र गतः इति देवताः न ज्ञातवत्यः । अतः इन्द्रस्य स्थाने तैः अन्यः नियोजनीयः अभवत् । सर्वे ऋषयः मिलित्वा नहुषस्य समीपं गत्वा - ''इन्द्र-पदवीग्रहणं कृत्वा भवान् त्रीन् लोकान् अपि पालयतु'' इति प्रार्थितवन्तः ।

*- (अनुवर्तते)*



# रसवार्ताः

## अतिदीर्घं क्रीडनकम्

बालानां क्रीडनकानि यदा स्मरामः तदा बाल-भुषुण्डिकाः, दूरात् निग्रहयोग्यानि कार्यानानि, रैल्यानानि इत्यादीनि स्मृतिपथम् आयान्ति । गजः, भल्लूकः, शशः इत्यादीनां पाञ्चालिकाः बालानां प्रियाः भवन्ति प्रायः । क्रीडनकेषु दीर्घतमं किम् इति जानन्ति भवन्तः ? ४१९ मीटर्दैर्घ्यपरिमितः क्रीडनकसर्पः १९९४ तमे वर्षे नार्वेविद्यार्थिभिः यः निर्मितः आसीत् सः एव तादृशः । किन्तु इदानीं सिङ्गपुरे ततोऽपि दीर्घं 'चैनीस् ड्रगन्'क्रीडनकं निर्मितम् अस्ति इति श्रूयते । विकलाङ्गानां क्षेमनिधेः सङ्ग्रहार्थं सिङ्गपुर-विमानसञ्चारसंस्थायाः अपेक्षायाः अनुगुणं तत् निर्मितम् इति श्रूयते । 'जेम् क्लिप्'साधनैः निर्मिता अतिदीर्घा शृङ्खला अपि सिङ्गपुरे एव अस्ति ।

## प्राचीनतमं रैल्यन्त्रम्

९५वर्षेभ्यः पूर्वं भारते यत् रैल्यन्त्रं सञ्चरति स्म तत् 'फैर्क्वीन्' इति नाम्ना निर्दिश्यते स्म । अनन्तरकाले तत् देहलीस्थे राष्ट्रियरैल्वस्तु-सङ्ग्रहालये स्थापितम् आसीत् । तद्द्वारा विदेशीयविनिमयद्रव्यं सम्पादयितुं शक्यते इति आलोच्य रेल्वेसंस्था तत् पुनरपि सञ्चारयोग्यं कृत्वा अलङ्कृत्य तस्य उपयोगम् आरब्धवती अस्ति । ६० जनाः यत्र उपवेष्टुम् अर्हन्ति तादृशं प्रकोष्ठद्वयं तेन योजितम् अस्ति । एकत्र जनानाम् उपवेशनार्थं व्यवस्था, अपरत्र वस्तुस्थापनार्थं व्यवस्था च कल्पिता अस्ति । अक्टोबर्मासतः एव अल्वार्-(राजस्थानस्थं) देहल्योः मध्ये तस्य सञ्चारः आरब्धः अस्ति । सप्ताहे एकवारं तत् सञ्चरति । पञ्चमासान् यावत् सञ्चरिष्यति च । अत्र प्रयाणं कर्तुं ४०० अमेरिकन्डालराणि (प्रायः रू. १५,०००-००) दातव्यानि भवन्ति । देहलीतः प्रस्थाय षड्घण्टाभ्यन्तरे तत् अल्वार्नगरं प्राप्नोति । तत्र व्यवस्थापकाः प्रयाणिकान् 'सरिस्का वैल्ड् लैफ् स्यांक्चीरि'प्रदेशं नीत्वा अनन्तरदिने रैल्समीपं प्रापयन्ति । एतत् यन्त्रं यथा निर्मितं सा ब्रिटिश्संस्था इदानीं नास्ति । इतोऽपि कानिचन वर्षाणि तत् यन्त्रं कार्यकरणसमर्थं तिष्ठेत् इति परिगण्यते ।



## क्रि.पू. ४ शतकीयं विश्वमानचित्रम्

त्रिंशद्वर्षेभ्यः पूर्वं चीनादेशे एकं ताम्रफलकं प्राप्तम् आसीत् । तत्र विश्वस्य मानचित्रं चित्रितम् आसीत् । एतत् क्रि.पू. ३४० तमे वर्षे सज्जीकृतं स्यात् इति भावयन्ति इतिहाससंशोधकाः । षिङ्षान्प्रदेशस्य हेबिपरगणजनपदस्य च एतत् मानचित्रम् एव लब्धेषु अतिप्राचीनम् इति परिभाव्यते । २३०० वर्षेभ्यः पूर्वं रचिते अपि अस्मिन् मानपत्रे परिमाणं तु निर्दुष्टम् अस्ति । किन्तु अक्षांश-रेखांशादयः तु न दृश्यन्ते ।

## चायचूर्णस्य महार्घता

मनः यदा खिन्नं श्रान्तं वा भवति तदा उष्णं चायपेयं यदि पीयते तर्हि शरीरे उल्लासः दृश्यते । किलोमितस्य चायचूर्णस्य मूल्यं १००-१५० रूप्यकात्मकं भवति । दार्जिलिङ्गप्रदेशे सज्जीकृतस्य विशिष्टचायचूर्णस्य सघोषविक्रयणं सद्यः कल्कत्तानगरे प्रवृत्तम् । तदा किलोमितं चायचूर्णं २७०० रूप्यकैः क्रीतम् अभवत् ।





# पुष्करमेला



पुष्करं राजस्थाने स्थितम् एकं लघु-पत्तनम्। प्रसिद्धाः देवालयाः तत्र बहवः सन्ति। उष्ट्राणां विक्रयणं महता प्रमाणेन अत्र प्रचलति प्रतिवर्षम्। कार्त्तिक-पूर्णिमातः दशभ्यः दिनेभ्यः पूर्वम् एव उष्ट्राः समूहरूपेण अत्र आनीयन्ते।
अलङ्कृताः उष्ट्राः अत्र प्रदर्श्यन्ते। महता प्रमाणेन उष्ट्रवाणिज्यं प्रचलति तदा। उष्ट्रधावनस्पर्धा अपि प्रचलति।

अलङ्कृताः पादरक्षाः, भित्तिचित्राणि, विविधानि आभरणानि च अत्र क्रेतॄन् विशेषतः आकर्षन्ति। अपूर्वेण हस्तकौशलेन निर्मितानि सुन्दराणि काष्ठशिल्पानि, रत्नकम्बलानि, मृत्पात्राणि, मणयः चापि मेलायां महता प्रमाणेन विक्रीतानि भवन्ति। उष्ट्रचर्मणा निर्मितानि रक्तपीतहरितादिवर्णीयाः अलङ्कृताः कूप्यः, दीपाधाराः चापि जनान् आकर्षन्ति। एतानि सर्वाणि यन्त्रसाहाय्यं विनैव जनैः निर्मितानि भवन्ति। अस्मद्देशीयानां कुशलकर्मिणाम् अपूर्वं कौशलं निरूपयन्ति एतानि। ललितकलाविनोदादिषु आसक्तानां निमित्तम् अत्र सूत्रचालित-पाञ्चालिकानृत्यानि, नाटकानि, गानगोष्ठ्यः, नृत्यकार्यक्रमाः इत्यादयः अपि व्यवस्थाप्यन्ते।

पुराणकालस्य राजानः

# मरुत्तः

मरुत्तः नाम महाशिवभक्तः आसीत् पूर्वम्। परमेश्वरस्य कृपया हिमालयस्थः सुवर्णराशिः एव तेन कदाचित् प्राप्तः। तम् उपयुज्य सः एकं यागम् आरब्धवान्। वेदमन्त्रोच्चारणपुरस्सरं यागः यदा प्रचलन् आसीत् तदा लङ्काधिपतिः रावणः तत्र आगतः। सः अभिमुखम् आगतान् सर्वान् राज्ञः युद्धार्थं निमन्त्रयन् शरणम् आगतान् परित्यजन् सम्मुखीकृतवतः जयन् स्वस्य सार्वभौमत्वं प्रतिष्ठापयन् तत्र आगतः आसीत्। सः मरुत्तस्य यागशालायाः समीपं गत्वा - ''मां शरणं गच्छतु। अन्यथा मया सह युद्धं कृत्वा यमलोकं वा शरणं गच्छतु'' इति दर्पेण उक्तवान्।

तदा तत्रत्याः देवताः भीत्या पशुरूपं पक्षिरूपं च प्राप्य 'अग्रे किं वा प्रवर्तेत' इति निरीक्षमाणाः दूरे स्थितवन्तः।

''कः भवान् ?'' इति पृष्टवान् मरुत्तः।

तदा रावणः आश्चर्यं प्रकटयन् - ''अहं कः इति न जानाति वा भवान् ? कीदृशम् अज्ञानं भवतः ? यस्य नाम्नः श्रवणात् सर्वे भीताः भवेयुः तादृशः कुबेरसहोदरः अहम्। अग्रजस्य कुबेरस्य एव पुष्पकविमानं स्वायत्तीकृतवान् वीराधिवीरः रावणोऽहम्'' इति उक्तवान्।

''अग्रजः जितः यत् तदेव अभिमानास्पदं मन्यते वा भवान् ? वस्तुतः तु तत् अवमानास्पदम्। भवादृशः दुष्टः एतस्मिन् लोके न जीवेत्। भवन्तम् इदानीम् एव यमपुरीं प्रति प्रेषयिष्यामि'' इति कोपेन उक्त्वा मरुत्तः धनुः गृहीतवान्।

तस्य धैर्यं दृष्ट्वा रावणः आश्चर्यचकितः। यतः अद्यावधि कोऽपि तम् एवं धैर्येण न सम्मुखीकृतवान् आसीत्। यदा तयोः युद्धम् आरब्धं तदा संवर्तकः नाम ऋषिः तौ निवारयन् मरुत्तम् उद्दिश्य - ''यागसमये कर्ता कोपाविष्टः न भवेत्। कोपं प्राप्य व्रतभङ्गं कृतवान् भवान् पराजयं प्राप्तवान् इव'' इति उक्तवान्।

एतत् श्रुत्वा लज्जया धनुः शिरः च अधः कृतवान् मरुत्तः। तत्काले तत्रैव स्थितः दैत्यगुरुः शुक्राचार्यः रावणम् उद्दिश्य - ''मरुत्तः उन्नीतं धनुः अधः कृतवान्। अतः सः भवता जितः इव'' इति उक्तवान्।

एतेन तृप्तः रावणः ततः निर्गतवान्।

मरुत्तः आरब्धं यागं यथाविधि निर्वर्तितवान्। जीवितान्तं यावत् सुवर्णस्य उपयोगं कुर्वन् सः अवशिष्टं सुवर्णं हिमालये एव निखातवान्। अग्रिमे काले धर्मराजः यज्ञार्थं तदेव सुवर्णम् उपयुक्तवान्।



# भवन्तः जानन्ति किम् ?

## वृत्तपत्रिकाः




क्रि. पू. ५ शतके रोम्नगरतः दूरस्थान् जनान् राजधानीवार्ता प्रापयितुं वृत्तलेखनानि प्रेष्यन्ते स्म । क्रि.पू. ६०तमे वर्षे ज्यूलियस्सीसरः एतस्य व्यवस्थितरूपं कल्पितवान् । तस्य शासनकाले प्रतिदिनम् अपि वृत्तलेखनानि प्रेष्यन्ते स्म। तानि अक्बाडयर्ना (नित्यघटनाः) इति निर्दिश्यन्ते। इदानीं याः वार्तापत्रिकाः दृश्यन्ते तादृशी वार्तापत्रिका ऐदम्प्राथम्येन १६६३तमे क्रिस्ताब्दे लण्डन्नगरे 'इण्टलिजन्स्'नाम्ना प्रकाशिता । अमेरिकादेशे बोस्टन्नगरे 'पब्लिक् अक्करेस्नेस्'नामिका पत्रिका १६९०तमे क्रिस्ताब्दे आरब्धा । तत्र यदा जनयुद्धं प्रवृत्तं तदा पत्रिकाणां विषये जनानाम् असक्तिः प्रवृद्धा । तत्काले तत्र ३७ विभिन्नपत्रिकाः प्रकाश्यन्ते स्म ।

## इन्द्रधनुः

### चलन्ति पुष्पाणि



समुद्रतीरे जलाशयेषु च क्वचित् शिलानां पार्श्वे 'अनिमोन्स्' दृष्टिगोचराणि भवन्ति । तरङ्गाणाम् अभावः यदा भवति तदा तेषां धूसरवर्णता अपि दृष्टिगोचरीभवति । एतानि यद्यपि 'वायुपुष्पाणि' (सी अनिमोन्स्) इति नाम्ना निर्दिश्यन्ते तथापि एतानि न पुष्पाणि, न वा सस्यानि । प्रत्युत सूक्ष्मजीविनः । लघुकीटान् गृहीत्वा खादन्तः मांसाहारिणः प्राणिनः एते । पृष्ठास्थिरहितशरीरयुक्ताः गलन्तिकाकाराः एते शरीरं परितः कुसुमकेसराकाराणि रोमाणि धरन्ति । अतः एव एतेषां पुष्पाकारता । एतत्कुलीयाः 'कोरल्स्'नामकाः जन्तवः खनिजपदार्थानाम् उपयोगेन द्रव्यविशेषम् उत्पादयन्ति । तत् एव 'प्रवाल'नाम्ना निर्दिश्यते ।

स्वातन्त्र्यस्य सुवर्णमहोत्सवस्य अवसरे चन्दमामायाः उपहारः

# प्रथमः स्वातन्त्र्यसङ्ग्रामः



*(भारतदेशस्य केषुचित् राज्येषु परकीयशासनस्य विषये विरोधभावः प्रबलः जायमानः आसीत् । कानपुर-आन्दोलनानन्तरं नानासाहेबः महाराजत्वेन अभिषिक्तः अभवत् । तया घटनया प्रेरिता झान्सीराज्ञी लक्ष्मीबायी - 'ईस्ट्-इण्डियासंस्थया आक्रान्तः भूभागः स्वतन्त्रः' इति घोषणां कृत्वा 'झान्सीदुर्गे विद्यमानाः ब्रिटिष्सैनिकाः इतः गच्छेयुः' इति सूचितवती । किन्तु तैः सैनिकैः तस्याः सूचनायाः विषये अवधानं न दत्तम् । झान्सीप्रजाः दुर्गम् आक्रम्य तत्रत्यसैनिकान् मारितवत्यः । तदनन्तरम्...)*

कस्यचित् दिनस्य सन्ध्यासमयः । यवनधर्मीयः कश्चित् संन्यासी षड्भिः अनुयायिभिः सह पूर्वाभिमुखं प्रस्थितवान् आसीत् । तदा एव हिन्दुधर्मीयः कश्चित् संन्यासी स्वशिष्यैः सह गजस्य उपरि वरण्डके विराजमानः तस्य सम्मुखम् आगतवान् । यदा यवनसंन्यासी हिन्दु-संन्यासिनं दृष्टवान् तदा अनुक्षणं हस्तम् उन्नीय - ''दीन् ! दीन्'' इति उक्तवान् । हिन्दुसंन्यासी अपि तथैव हस्तम् उन्नीय - ''भोम्, भोम्'' इति उक्तवान् । गजात् अवतीर्य हसन्तं यवनसंन्यासिनम् आनन्देन आलिङ्गितवान् च । उभौ अपि स्वस्य अनुचरान् तत्रैव परित्यज्य निकटे विद्यमानं पर्वतम् आरुह्य गभीरचर्चायां निमग्नौ अभवताम् ।

किं ताभ्यां स्वधर्मस्य सिद्धान्तानां विषये चर्चा क्रियमाणा आसीत् ? न तथा ।

परकीयस्य शासनस्य विरोधरूपेण सामान्यजनानां जागरणाय आत्मना कृतानां प्रयत्नानाम् अनुभवान् जयापजयान् च परस्परं सूचयतः स्म तौ । 'कैः कैः महाराजैः मिलितम्', 'कैः कैः सेनानायकैः सह चर्चा जाता', 'केभ्यः प्रभावि-प्रमुखेभ्यः सन्देशाः प्रेषिताः', 'के कीदृशं साहाय्यं कृतवन्तः, करिष्यन्ति च' इत्यादीनां बहूनां विषयाणां विनिमयः तत्र अभवत् ।

ब्रिटिष्शासनं विरुध्य प्रचलिते आन्दोलने हिन्दवः यवनाः च परस्परं भेदभावनाः विस्मृत्य ऐकमत्यं प्रदर्शितवन्तः । यद्यपि वेषभूषणे, भाषायां, संस्कृत्यां च महान् भेदः आसीत्, तथापि उभयपक्षीयाः अपि 'वयं भारतमातुः पुत्राः' इति भावनया कार्यं कुर्वन्ति स्म । तेषां नायकौ नानासाहेब-अजिमुल्लाखानवर्यौ 'हिन्दवः यवनाः च परस्परं भ्रातरः इव' इत्यत्र विश्वसन्तौ ऐकमत्येन सङ्घर्षं कृत्वा देशस्य स्वातन्त्र्यप्राप्तये स्वानुचरान् प्रोत्साहयतः स्म ।

सुन्दरः अजिमुल्लाखानवर्यः राजतन्त्री इति प्रख्यातः आसीत् । सः आङ्ग्लभाषां फ्रेञ्च्भाषां च बहुसम्यक् जानाति स्म । नानासाहेबस्य प्रतिनिधिरूपेण इंग्लेण्ड्देशं गत्वा ईस्ट्-इण्डियासंस्थायाः ज्येष्ठेभ्यः अधिकारिभ्यः च सः अत्रत्यां परिस्थितिं यथाशक्ति निवेदितवान् । किन्तु अस्मिन् कार्ये तेन यशः न प्राप्तम् । अतः सः 'संस्थया क्रियमाणात् अन्याय्यात् मुक्तिः प्राप्तव्या चेत् ईस्ट्-इण्डियासंस्था एव भारतात् निवारणीया । एषः एकः एव मार्गः' इति दृढनिश्चयं कृतवान् ।

अनन्तरं सः मातृभूमिं प्रति प्रत्यागत्य





वर्येण ज्ञाता । 'कानपुरजनैः यत् पूर्वं कृतं तस्य प्रतीकारः साधनीयः' इति उद्देशेन सहस्रं ब्रिटिष्सैनिकान्, शतशः भारतीयसैनिकान् च स्वीकृत्य सः कानपुरस्य उपरि आक्रमणाय प्रस्थितवान् । गमनमार्गे एव क्रूरस्य तस्य पैशाचिक-कृत्यानाम् आरम्भः अभवत् । ग्रामाणां लुण्ठनं, दहनं च कुर्वन् सः सम्मुखम् आगतानां सर्वेषां भारतीयानां मारणं कारितवान् । फतेघडनगरस्य प्राप्तेः समनन्तरमेव सः 'यथेच्छं लुण्ठनं कुर्वन्तु' इति सैनिकान् सूचितवान् । तत्रत्याः प्रजाः गृहेषु बन्दीकृत्य गृहस्य अग्निस्पर्शः कारितः तेन ।

कानपुरस्य दिशि ह्यावलाक्वर्यस्य सैनिकानाम् आगमनं, तेषां घोरकृत्यानि च नानासाहेबेन ज्ञातानि आसन् । 'नानासाहेबेन कानपुरात् दूरे स्थातव्यम् । युक्ते समये ब्रिटिष्जनानाम् उपरि आक्रमणं करणीयम्' इति केषाञ्चन हितचिन्तकानां मतम् आसीत् । 'किन्तु शत्रूणां साक्षात् सम्मुखी-करणमेव वरम्' इति नानासाहेबः चिन्तितवान् ।

'पराजयः अङ्गीकरणीयः भवेत् कदाचित् । किन्तु तावता केषाञ्चन शत्रु-सैनिकानां मारणं तु निश्चयेन भविष्यति । तेनाऽपि लाभाः एव भविष्यन्ति' इति तस्य मतम् आसीत् ।

तावता ह्यावलाक्सैन्यं कानपुरस्य समीपे एव उपस्थितम् अभवत् । नानासाहेबस्य सैनिकाः नगरं परित्यज्य बहिः एकत्र सम्मिलिताः अभवन् । नानासाहेबः स्वयं

नानासाहेबेन मिलितवान् । 'देशस्य स्वातन्त्र्यं कथमपि सम्पादनीयम् एव' इति तौ सङ्कल्पं कृतवन्तौ । तदनुगुणं तौ रहस्यरूपेण बहुत्र क्रान्तिकारिसैन्यस्य सङ्घटनम् अपि कृतवन्तौ । इतरेभ्यः नायकेभ्यः सन्देशप्रापणाय दूतानां प्रेषणं कृत्वा नानासाहेबस्य कार्ये विशेषतः सहकृतवान् अजिमुल्लाखानः ।

कानपुरस्य विमोचनात्, नानासाहेबस्य पट्टाभिषेकात् च ब्रिटिष्संस्थायाः घोरः अपमानः जातः आसीत् । 'नानासाहेबः कथञ्चित् दमनीयः' इति उद्देशेन ब्रिटिष्सर्वकारेण 'ह्यावलाक्'नामकः कश्चित् सेनानायकः प्रेषितः ।

कानपुरसमीपस्थे नदीतीरे प्रवृत्तस्य ब्रिटिष्जनानां मारणस्य वार्ता ह्यावलाक्-

सेनाधिपत्यं निर्वहन् सैन्यम् अग्रे नीतवान् । किन्तु यथा यथा नानासाहेबस्य सैन्यम् अग्रे आगतं तथा तथा ह्यावलाक्सैन्येन पृष्ठतः गतम् । एतत् किमर्थम् इति अजानन् नानासाहेबः सैन्यम् अग्रे नीतवान् । वस्तुतः तु ह्यावलाक्वर्येण नूतनं युद्धतन्त्रम् अनुसृतम् आसीत् । नानासाहेबस्य सैनिकाः 'शत्रुसैन्यस्य सम्मुखं गत्वा युद्धं करणीयम्' इति सज्जतां कृत्वा अग्रे आगताः आसन् । किन्तु ह्यावलाक्सैनिकाः भागद्वयेन विभज्य नगरम् उभयतः आवृत्य युगपत् आक्रमणं कृतवन्तः । नानासाहेबेन एतादृशी प्रतिक्रिया निरीक्षिता न आसीत् । अतः नानासाहेबस्य सैन्ये सम्भ्रान्तिः उत्पन्ना । तथापि नानासाहेबः धैर्यच्युतः न जातः । भ्रान्तान् सैनिकान् एकत्रीकृत्य दृढविश्वासेन सः युद्धम् अनुवर्तितवान् । किन्तु आंग्ल-सैन्यं सुष्ठु प्रशिक्षितम् आसीत् । न केवलं तावत्, तत् विविधैः आधुनिकशस्त्रैः सज्जम् अपि आसीत् । तादृशस्य ब्रिटिष्सैन्यस्य आक्रमणं सोढुं नानासाहेबस्य सैन्यस्य सामर्थ्यं सर्वथा न आसीत् । अतः ब्रिटिष्सैनिकाः नानासाहेबस्य सैन्यं लीलया उध्वस्तं कृतवन्तः ।

भुषुण्डीनां शब्दः, सैनिकानाम् आक्रन्दनम् आक्रोशः च सर्वत्र प्रसृतः आसीत् । 'नानासाहेबं गृह्णन्तु' इति ह्यावलाकः सैनिकान् आदिष्टवान् । ततः शवानां मध्ये, व्रणितानां मध्ये च अन्वेषणं प्रवृत्तम् । गृहेषु अपि अन्वेषणम् अभवत् । किन्तु कुत्रापि नानासाहेबः तैः न दृष्टः । 'नानासाहेबः कैश्चित् अनुचरैः सह सुवर्णं



धनं च स्वीकृत्य पलायितवान्' इति वार्ता ह्यावलाक्वर्येण ज्ञाता ।

ह्यावलाक्वर्यस्य निराशा अभवत् । कोपग्रस्तः सः घोरं प्रतीकारं कर्तुम् इष्टवान् । नगरे विद्यमानानां शतशः ब्राह्मणानां बन्धनं कारितवान् सः । तेषु अनेके पण्डिताः, गुरवः, अर्चकाः, विद्यावन्तः, प्रमुखाः च आसन् । सैनिकाः तान् बलात् आकर्षन्तः जनरहितम् ईस्ट्-ईण्डियासंस्थायाः दुर्गं नीतवन्तः । तस्य दुर्गस्य प्राङ्गणे भूमौ रक्तस्य चिह्नानि दृश्यन्ते स्म । तत् ब्रिटिष्जनानाम् रक्तम् आसीत् । भूमौ शयनं कृत्वा जिह्वया तस्याः भूमेः स्वच्छीकरणं करणीयम् इति तान् बन्धिजनान् पीडितवन्तः ते । बन्धिजनैः तथैव करणीयम् आपतितम् । तथा

अवमानकरणेन अपि तृप्तिम् अप्राप्नुवन् ह्यावलाक् तेषां मारणं कृतवान् ।

वीलर्मरणस्य प्रतीकाररूपेण जनरल् ह्यावलाक् मुग्धाः प्रजाः घोररूपेण पीडयन् आसीत् । स्थानीयानां नागरिकाणां सामूहिकरूपेण उद्बन्धनं कारितवान् सः । तथाऽपि मरणसमये कैश्चित् क्रान्तिकारिभिः प्रदर्शितं धैर्यम् अनन्यसदृशम् आसीत् । स्वसिद्धान्तानां विषये, मातृभूमेः विषये च भक्त्याः, श्रद्धायाः, अचलविश्वासस्य च द्योतकरूपेण तेषाम् आचरणम् आसीत् ।

नानासाहेबस्य शासनकाले न्यायाधीशरूपेण कार्यं कुर्वाणं कञ्चित् ज्येष्ठं बद्ध्वा ह्यावलाक् मरणदण्डनं घोषितवान् । तत् दण्डनं मदर्थं न इति चिन्तयन् इव सः न्यायाधीशः व्यवहरति स्म । सः किञ्चिदपि विचलितः न आसीत् । सधैर्यं वक्षःस्थलम् उन्नीय मरणदण्डनस्थानं गतवान् सः । तत्र तस्य अन्त्ययात्रायाः सज्जता प्रचलन्ती आसीत् । भयोद्वेगरहितः सः तत् दृश्यं निश्चिन्तः सन् पश्यन् आसीत् । समाधिस्थितिं प्राप्तवान् योगीश्वरः इव दृश्यते स्म सः । तस्य मनसि 'मरणदण्डनं नाम दुष्टानां सहवासात् मुक्तिं स्वर्गसुखं च प्राप्तुं स्थितः श्रेष्ठः मार्गः' इति भावः आसीत् ।

कानपुरस्य पुनर्वशीकरणं कृतम् इत्यतः ईस्ट्-ईण्डियाशिबिरेषु आनन्दोत्सवः आचर्यते स्म । किन्तु तावता आपदः आपतेयुः इति वार्ता अपि तैः ज्ञाता । 'देहल्यां क्षोभः आरब्धः', 'लक्नोनगरे आन्दोलनानि अभवन्', 'बिहारे तत्र तत्र कोलाहलः प्रवर्तमानः अस्ति' इत्यादयः वार्ताः तैः ज्ञाताः ।

भारते इंग्लेण्ड्देशे च निवसतां ब्रिटिष्जनानां मनसि प्रश्नः भवति स्म । 'अस्माकं शासनम् इतोऽपि कियत्कालम् अनुवर्तेत ?' इति । तेषां संशयः आधाररहितः न आसीत् । परकीयशासनस्य निवारणस्य अस्मिन् प्रयत्ने यदि भारतदेशस्य राजानः एकत्रिताः अभविष्यन् तर्हि प्रथमस्वातन्त्र्यान्दोलनकाले एव भारतेन स्वातन्त्र्यं प्राप्तम् अभविष्यत् । किन्तु तथा न अभवत् ।

– *(अनुवर्तते)*





# मानापहारकं पायसम्

कस्मिंश्चित् ग्रामे सुन्दरः नाम भूस्वामी आसीत् । तस्य पित्रार्जिता स्वार्जिता च सम्पत्तिः महती आसीत् । किन्तु सः महाकृपणः आसीत् । तथापि एवं हि श्रूयते स्म 'सुन्दरस्य गृहे भोजनसमये कोऽपि अतिथिः भवेत् एव' इति । अत्र कारणम् अपि आसीत् ।

प्रतिदिनं मध्याह्नस्य भोजनात् पूर्वं द्वारे स्थित्वा अन्ये ग्रामीणाः यथा शृणुयुः तथा - ''मया सह भोजनं कर्तुम् अभ्यागतः कोऽपि अस्ति किम् ?'' इति उच्चस्वरेण वदति स्म सुन्दरः । परन्तु वीथ्यां यदि साधूनाम् आगमनं दृश्यते तर्हि झटिति सः गृहस्य अन्तः गत्वा द्वारस्य पिधानं करोति स्म ।

एकस्मिन् दिने रामः नाम कश्चन दरिद्रः जीवनोपायम् अन्विष्यन् पत्न्या सह तं ग्रामम् आगतवान् । ग्रामे यदा विचारितवान् तदा तेन ज्ञातं यत् - 'सुन्दरः नाम कश्चन उदारः धनिकः अस्ति । तस्य गृहे किमपि कार्यं लभ्येत' इति ।

रामः सुन्दरस्य गृहं गत्वा विनयेन उक्तवान् - ''आर्य ! भवान् मह्यं मत्पत्न्यै च यदि कार्यं दास्यति तर्हि आवां भवता दीयमानेन वेतनेन जीवनं यापयन्तौ आजीवनं भवतः सेवां करिष्यावः'' इति । तस्मिन् समये सुन्दरं परितः ज्येष्ठाः केचन आसन् । 'सर्वेषां पुरतः मम मानः न गच्छेत्' इति चिन्तयन् सुन्दरः रामं, रामस्य पत्नीं च कार्यार्थं स्वीकृतवान् । किन्तु वेतनस्य विषयं तु न उक्तवान् ।

सुन्दरस्य गृहस्य पृष्ठतः काचन पुरातनगोशाला आसीत् । तत्र रामः पत्न्या सह वासम् आरब्धवान् । रामः गृहकार्येण सह क्षेत्रे अपि कार्यं करोति स्म । रामस्य पत्नी गृहकार्याणि करोति स्म । द्वाभ्यां

'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा'



कृपणतां दृष्ट्वा नितरां खिन्नः सः निर्णीतवान् आसीत् यत् योग्येन क्रमेण सुन्दरं बोधयित्वा एव मया इतः निर्गन्तव्यम् इति । अतः रामः सुन्दरविषयकम् असन्तोषम् भङ्ग्यन्तरेण प्रकटयति स्म । यदा रामः भोजनार्थम् उपविशति तदा - ''रे ! पायसं सिद्धं वा ? शीघ्रम् आनयतु भवती । शर्करां किञ्चित् अधिकं योजयतु । आगमनसमये राजकदलीफलद्वयम् अपि आनयतु'' इति उच्चैः पत्नीं वदति स्म । तस्य पत्नी यवाग्वा किञ्चित् लवणं मिश्रीकृत्य तया सह हरितमरीचिकाद्वयम् अपि आनीय तस्य पुरतः स्थापयति स्म ।

प्रतिदिनं रामः पत्नीं 'पायसं, राजकदलीफलं च आनयतु' इति यत् वदति स्म तत् सुन्दरस्य पत्नी शृणोति स्म । पायसं बहुप्रियम् आसीत् तस्याः । विवाहस्य अनन्तरं सा पायसस्य रुचिमेव न दृष्टवती आसीत् । राजकदलीफलस्य आस्वादनस्य अवकाशः तु दूरापास्तः एव आसीत् । रामः यदा पत्नीं सूचयति स्म तदा कथनध्वनिश्रवणात् एव तस्याः मुखे लालारसः उत्पद्यते स्म । खादनेच्छा च तीव्रा भवति स्म । पायसखादनेच्छां सोढुम् अशक्ता सा पायसस्य विषयं पतिम् उक्तवती । एतत् श्रुतवतः सुन्दरस्य महत् आश्चर्यं जातम् । अल्पं वेतनं प्राप्नुवन्तौ अपि एतौ प्रतिदिनं पायसं, कदलीफलं च कथं स्वीकर्तुं शक्नुतः इत्येव न ज्ञातं सुन्दरेण । अतः राममेव पृष्ट्वा ज्ञातव्यम् इति चिन्तितवान् सः ।

सम्यक् कार्यं कारयन् सुन्दरः ताभ्यां न्यूनं वेतनं यच्छति स्म । तत् वेतनं रामस्य, तस्य पत्न्याः च उपाहारार्थमपि अपर्याप्तं भवति स्म । अतः तौ प्रतिदिनं यवागूं कृत्वा तया लवणं मिश्रीकृत्य हरितमरीचिकाद्वयेन सह भोजनं कुर्वन्तौ दिनानि यापयतः स्म ।

सुन्दरस्य गृहे कदापि पाकस्य अवशेषः किञ्चिदपि न भवति स्म । यथा किञ्चिदपि न शिष्येत तथा पाकं करोति स्म सुन्दरस्य पत्नी ।

''एतदेव कार्यं यदि अन्यत्र क्रियेत तर्हि उपाहारार्थं वा धनं लभ्येत । अतः इतः गच्छाव तावत्'' इति वदति स्म रामस्य पत्नी ।

सुन्दरस्य गृहं त्यक्तव्यम् इत्येव रामस्यापि इच्छा आसीत् । किन्तु सुन्दरस्य

अनन्तरदिने रामः यदा कार्यार्थम्

आगतवान् तदा सुन्दरः तेन सह सम्भाषणं कुर्वन् - "भोः ! भवतः जीवने न्यूनता काऽपि नास्ति खलु ?" इति पृष्टवान् ।

"अस्मादृशानां जीवनं न्यूनतारहितं कथं वा भवेत् ?" इति उक्तवान् रामः खेदेन ।

तदा सुन्दरः - "किमर्थं भवान् दरिद्रः इव सम्भाषणं करोति ? प्रतिदिनं भवान् पायसं पिबति इति, राजकदलीं खादति इति च अहं न जानामि इति चिन्तितवान् वा भवान् ?" इति पृष्टवान् ।

"सत्यम् । विशिष्टं पायसं सेव्यते अस्माभिः । सौभाग्यवशात् मम पत्नी तादृशं पायसं सम्यक्तया करोति । तदेव सारायते अस्मज्जीवने" इति उक्तवान् रामः ।



'तर्हि सिद्धं यत् पायसम् अल्पमूल्येन एव सज्जीकर्तुं शक्यते इति' इति चिन्तितवान् सुन्दरः ।

कानिचन दिनानि अतीतानि । अथ कदाचित् सुन्दरस्य पुत्रीं द्रष्टुं पार्श्वग्रामतः कश्चन भूस्वामी पुत्रेण, बान्धवैः च सह आगतवान् । दशाधिकजनान् आगतान् दृष्ट्वा एव सुन्दरस्य हृदयस्तम्भनं जातम् इव । वधूदर्शनार्थम् आगतानां कृते भूरिभोजनं तु व्यवस्थापनीयम् एव आसीत् खलु ? 'भूरिभोजनस्य व्यवस्थापनं तु अपरिहार्यम् । अतः व्यये वा किञ्चित् न्यूनता कथञ्चित् सम्पादनीया' इति चिन्तितवान् सुन्दरः ।

तदा सुन्दरस्य मनसि कश्चन उपायः स्फुरितः । सः रामम् आहूय - "राम ! झटिति आपणं गत्वा पायसार्थम् आवश्यकानि वस्तूनि, भवता प्रतिदिनं यानि खाद्यन्ते तानि फलानि च आनयतु । पायसं भवतः पत्नी एव सज्जीकरोतु । व्ययस्य न्यूनीकरणविषये तु विशेषावधानं भवतु" इति उक्तवान् ।

'अधुना योग्यः अवकाशः प्राप्तः मया' इति चिन्तयन् रामः आपणतः तण्डुलखण्डान् आनीय पत्न्यै दत्त्वा, कर्णे रहसि किमपि उक्त्वा 'अतिथिभ्यः पाकं सज्जीकरोतु' इति तां सूचितवान् ।

अतिथयः वधूपरीक्षां कृत्वा मुहूर्तादिकं च निश्चित्य मध्याह्ने भोजनार्थम् उपविष्टवन्तः । सुन्दरस्य पत्नी परिवेषणं कर्तुं लज्जाम् अनुभवन्ती रामस्य पत्नीम् एव सूचितवती यत् अद्य भवती एव परिवेषयतु इति ।

''सर्वेभ्यः प्रथमं पायसं परिवेषयतु'' इति सुन्दरः रामस्य पत्नीम् आदिष्टवान् ।

रामस्य पत्नी यवागूपात्रम् आनीय एकैकस्य पर्णे अपि यवागूं परिवेषितवती । स्वस्य पर्णे स्थापितं पदार्थं दृष्टवतः वरस्य पितुः परमेश्वरस्य मुखं रोषेण अवमानेन च आरक्तं जातम् ।

भोजनारम्भात् पूर्वमेव अतिथिनां मुखे जातं परिवर्तनम् अभिज्ञाय सुन्दरः – ''एतत् तु पायसम् । भवतां निमित्तम् एव अद्य विशेषतया सज्जीकारितवान् अस्मि । कदलीफलेन सह पायसस्य खादनम् अमृतसेवनायते'' इति उक्तवान् ।

तदा परमेश्वरः कोपेन उत्थाय – ''बहु-समीचीनः मनुष्यः भवान् ! अस्माकम् अपमाननार्थम् एव एवं कृतं भवता । एतादृशस्य भवतः सम्बन्धः किमर्थं करणीयः ? यवागूं परिविष्य 'पायसं परिविष्टम्' इति वदति खलु भवान् ? वयं यवागू-पायसयोः भेदं किं न जानीमः ?'' इति वदन् स्वबान्धवान् उत्थाप्य शीघ्रं ततः निर्गतवान् । एषः विषयः क्षणाभ्यन्तरे ग्रामे प्रसृतः अभवत् ।

रामस्य, तस्य पत्न्याः च कार्यं दृष्टवतः सुन्दरस्य कोपः आगतः । सः क्रोधेन रामं निन्दितवान् – ''अये दुष्ट ! भवान् 'पत्नीद्वारा पायसं कारयामि' इति उक्त्वा यवागूं कारयित्वा अतिथीनां पुरतः मम अपमाननं कृतवान् खलु ?'' इति ।

सुन्दरस्य गृहे किं प्रवृत्तम् इति ज्ञातुं तावता तत्र बहवः उपस्थिताः आसन् । तेषां पुरतः रामः शान्ततया एव उक्तवान् – ''श्रीमन् ! दरिद्राणां जीवने यवागूः एव पायसायते इति भवान् न जानाति किम् ? भवता दीयमानेन वेतनेन वयं ऋते यवाग्वाः, किं पायसं सज्जीकर्तुं शक्नुयाम ? 'प्रतिदिनं यत् पायसं भवन्तः सज्जीकुर्वन्ति तदेव सज्जीकारयतु' इति खलु सूचितम् आसीत् भवता ? अतः अतिथयः यदा आगताः आसन् तदा तथैव कारितं मया । अत्र मम कः दोषः ?'' इति ।

एतत् श्रुतवतः सुन्दरस्य प्राणाः गताः इव । किंकर्तव्यतामूढः सः मौनम् आश्रितवान् । 'भवान् सुन्दरं सम्यक् बोधितवान्' इति रामं श्लाघितवन्तः सर्वे ग्रामवासिनः ।



# अतिबुद्धिः

परमेश्वरस्य पुत्रः परशुरामः यद्यपि बुद्धिमान् आसीत् तथापि विद्याभ्यासे आसक्तः न आसीत्। 'अहं बुद्धिमान् अस्मि । अतः विद्याभ्यासस्य आवश्यकता नास्ति मम' चिन्तयति स्म सः ।

कदाचित् परशुरामः ग्रामे अटित्वा समयं व्यर्थतया यापयित्वा गृहं प्रत्यागतः । तदा तस्य प्रवृत्तिं खण्डयित्वा परमेश्वरः खेदेन उक्तवान् - ''विद्याभ्यासं विना भवान् कथं जीवेत् इति न ज्ञायते'' इति ।

''किं मम निन्दनेन ? भवतः यावत् बुद्धिमत्ता ततोऽपि अधिका अस्ति मम । सर्वदा अपि पुत्राः पितुः अपेक्षया अधिकबुद्धिमन्तः भवन्ति'' इति उक्तवान् परशुरामः ।

''कथं तत् ?'' इति कुतूहलेन पृष्टवान् परमेश्वरः ।

''पुत्राणाम् एव बुद्धिमत्ता अधिका इति यदि अहं सयुक्तिकं निरूपयेयं तर्हि भवता पुनः कदापि अहं न निन्दनीयः । एतत् अनुमन्यते वा भवता ?'' इति पृष्टवान् परशुरामः ।

''भवतु । निरूपयतु तावत्'' इति उक्तवान् परमेश्वरः ।

''मेघदूतकाव्यं कः विरचितवान् ?'' इति पृष्टवान् परशुरामः ।

''महाकविः कालिदासः'' इति उत्तरं दत्तवान् परमेश्वरः ।

''रघुवंशमहाकाव्यं कः लिखितवान् ?'' इति पुनः पृष्टवान् परशुरामः ।

''कालिदासः एव'' इति उक्तवान् परमेश्वरः ।

''कुमारसम्भवं कः विरचितवान् ?'' इति पृष्टवान् परशुरामः ।

''कालिदासः एव'' इति उत्तरं दत्तवान् परमेश्वरः ।

तदा परशुरामः हसन् - ''पश्यतु, सर्वाणि श्रेष्ठकाव्यानि कालिदासः एव विरचितवान् । तस्य पिता एकम् अपि न लिखितवान् । अतः सिद्धं यत् पुत्रः एव श्रेष्ठः इति'' इति उक्त्वा ततः निर्गतवान् ।

पुत्रस्य अतिबुद्धिमत्तायाः निमित्तं हसनीयम् उत रोदनीयम् इति अजानन् मौनम् आश्रितवान् परमेश्वरः ।



# चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

विजितां शीर्षिकां जुलै - १९९८ मासे प्रकटयिष्यामः ।



V. Peppin Mary



A. Krishnaveni

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा मे - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः ।
* अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया ।

**चन्दमामा(संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, २ घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

'जनवरी'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - मृगराजोऽहं, भीतिं जनयति सर्वेषु मम गर्जनम् ।

द्वितीयचित्रम् - निरर्थकं तव जीवनं, परोपकारार्थमिदं शरीरम् ।

प्रेषकः - वि.आर्. राममूर्तिः, १८/१, एम्.के. अम्मन् कोयल् स्ट्रीट्, चेन्नै - ६०० ०२६.




Printed by B.V. REDDI at Prasad Process Private Ltd., Chandamama Buildings, Chennai - 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, 188, N.S.K. Salai, Vadapalani, Chennai - 600 026 (India) Editor : NAGI REDDI.

CHANDAMAMA (Sanskrit) May 1998 Regd. No. TN / MS (S) 302/97
Registrar of News Papers, India. RN 42664/85